तद्योगतो लक्षणया पुनरन्यत्र वर्तते[1] ।
[2]पुरुषादावर्शे[1] आदौ स्वाङ्गाद्धीनादितीरितात् ॥२९६॥

**अशेर्णिच्च ॥ १-५० ॥**

आशिरः क्षीरविकृतौ भोजनेऽग्न्यर्कयोस्त्रिषु ॥

**अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥ १-५१ ॥**

सप्त शब्दाः ॥

अजिरः प्राङ्गणे काये विषये दर्दुरेऽनिले ॥ २९७ ॥
शिशिरो ना हिमे न स्त्री त्वृतुभेदे जडे त्रिषु ।
ऋत्वणा[3]सन्धिवेलेति जाताद्यर्थेषु शैशिरम् ॥ २९८ ॥

अदृढे निश्चले प्राज्ये शिथिलं च स्थिरं स्फिरम् ।
विज्ञातव्यं··· ···· · · · ·· ·········· ॥२९९॥

स्थेयः स्थेयान् स्थिरे स्थेष्ठः स्फेयांश्च भवति स्फिरे[3] ।
प्रि[4]यस्थिरेति स्थस्फाभ्यामिष्ठन्नीयसुनोर्विधौ ॥ ३०० ॥

तिष्ठतेस्तु वुकि ह्रस्वे स्थविरो नावरञ्जने ।
तद्भावे स्थाविरं प्रा[5]णभृज्जातीत्यञ्विधानतः ॥ ३०१ ॥

खदिरे भेकभेदे स्त्री ना चन्द्रे दन्तधावने ।
रुचिरं न द्वयोः षण्डे सिद्धं बाहुलकादिह ॥ ३०२ ॥

**सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥ १-५२ ॥**

एकादश धातवः ॥

स्याज्जले सलिलं मिश्रे गहने कलिलं त्रिषु ॥
अनिलः पुंसि पवने महिला फलिनीस्त्रियोः ॥ ३०३ ॥

पृ[6]षोदरादिपाठेन महेलापीष्यते क्वचित् ।
भडिलः सेवके शूरे भण्डिलः शुभदूतयोः ॥ ३०४ ॥

१. Pā. V-ii-127.
२. Ganasūtra under Pā. V-ii-127.
३. Pā. IV-iii-16.
४. Pā V-i-129.
५ Pā. VI-iv-157.
६. Pā. VI-iii-109.

1. वर्तते is missing in the original.
2. The original reads ......द्वार्शे आदौ.
3. The original reads स्थेयांश्च भवति स्थिरे.

शण्डिलस्तु मुनौ मूर्खे तीर्थे तु स्यान्नपुंसकम् ।
शाण्डिल्यस्तु भवेत्तस्य गोत्रापत्ये च बिल्वके ॥ ३०५ ॥
पिण्डिलो गणके पुंसि स्थूलजङ्घे च कथ्यते ।
[1]स्यात्तुण्डिलस्तु मुखरे कोकिलस्तूच्यते पिके ॥३०६॥
कोकिलेत्येव टाप् स्त्रीत्वे जातिपुंयोगयोः स्मृतः ।
भविलं भवने प्रोक्तं भव्येऽपि च मनीषिभिः ॥ ३०७ ॥
अत्र बाहुलकात्सिद्धमराले कुटिलं त्रिषु ॥

कपेश्च ॥ १-५३ ॥　　कपिः सौत्रो धातुः ॥
कपिला रेणुकायां च शिंशपागोविशेषयोः ॥ ३०८ ॥
पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ।
नानले वासुदेवे च मुनिभेदे च कुक्कुरे ॥ ३०९ ॥

गुपादिभ्यः कित् ॥ १-५४ ॥　　गुपिलो राज्ञि तिजिलः शशाङ्के गुहिलं वने ।
गुपादिभ्यः किद्वचनादन्येऽप्यूह्या विपश्चिता ॥ ३१० ॥

मिथिलादयश्च ॥ १-५५ ॥　　मिथिला नगरीभेदे शैषिकेऽणि तु मैथिलः ।
जानकी मैथिली सीता पथिलः पथिकः स्मृतः ॥३११॥
मिथिलाद्या एवमूह्यास्सविकारा निपातनात् ॥

पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ १-५६ ॥　　पतेरो गन्तरि खगे कठेरः कृच्छ्रजीविनि ॥ ३१२ ॥
पर्णाशे तु कुठेरः स्यान्न नु बाहुलकादिह ।
मेघे गडेरो मशके गुडेरो विबुधैः स्मृतः ॥ ३१३ ॥
हिंस्रे जन्तौ तु कथितो दशेर इति कोविदैः[2] ॥

कुम्बेर्नलोपश्च ॥१-५७॥ कुबेरः पुंसि कथितो नन्दिवृक्षे धनाधिपे ॥ ३१४ ॥

1. The original reads :—स्यात्तुण्डिलस्तु म........कोकिकस्तूके........ पिके ॥

2. The original adds here :—पाठान्तरम्
खगे पतेरः कृपणे कठेरः पर्णाशवृक्षे कथितः कुठेरः ।
मेघे गडेरो मशके गुडेरो हिंस्रे दशेरो धनदे कुबेरः ॥
धनदे कुबेर इत्युत्तरसूत्रोदाहरणम् । तथाहि—

कृष्णवृन्तौषधीभेदे कुबेराक्षिः[?]स्त्रियां मता ।
बेरशब्दाच्छरीरार्थात्कुसमासेऽप्यमुं विदुः[1] ॥ ३१५ ॥

**शादेस्त च ॥ १-५८ ॥** शतेर इति विद्वद्भिः शत्रुवाचि निगद्यते ॥

**मूलेरादयश्च ॥ १-५९ ॥** मूलेरस्तु जटायां स्याद्गुधेरो गोप्तरि स्मृतः ॥ ३१६ ॥
गुहेरो लोहघाती स्यान्मुहेरो मूर्ख उच्यते ।
मूलेरादिष्विहान्येऽपि ज्ञेया एवं विचक्षणैः ॥ ३१७ ॥

**कबेरोतच् पश्च ॥१-६०॥** कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः ।
तद्गुणे त्वनुदात्तादेरञि कापोत उच्यते ॥ ३१८ ॥
मयूरादिष्वेवमेव चित्तवस्तु विचिन्त्यताम् ॥

**भातेर्डवत् ॥ १-६१ ॥** भातीत्यर्थे भवच्छब्दः पठितः सर्वनामसु ॥ ३१९ ॥
असौ लोके तु सर्वत्र युष्मदर्थे प्रयुज्यते ।
सामानाधिकरण्येऽपि मध्यमं न प्रयोजयेत् ॥ ३२० ॥
शेषत्वात्केचिदत्राहुरामन्त्रितपरो यदि ।
अन्यूनानतिरिक्तार्थो युष्मच्छब्दश्च तत्करः ॥ ३२१ ॥
बहुमन्ये न तदहं युष्मदस्थानितां वदन् ।
आगच्छ देवदत्तेति प्रभृतिष्ववलोकनात् ॥ ३२२ ॥
यत्र तु प्रथमं तत्र स्थानितापि न युष्मदः ।
न युष्मदर्थो लोकेऽन्यः शब्दः शब्देषु दृश्यते ॥ ३२३ ॥
·········तौयोगादनङ्गत्वाच्च तद्भिदा [?] ।
तत्र चारोपिताभेदाद्भवेतां मध्यमोत्तमौ ॥ ३२४ ॥
भवानाह भवान् वक्तीत्यादिर्गौरवगोचरः ।
देवो यदाज्ञापयति स्वामी यदभिमन्यते ॥ ३२५ ॥
यदादिशति च श्रीमानित्याद्यभिमुखोक्तिवत् ।
त्वमर्थेऽस्यहमर्थेऽस्मि तिङन्तप्रतिरूपकम् ॥ ३२६ ॥

१. Pā. IV-ii-44.

1. The original reads **अव्ययं विदुः**.

अस्तु वा युष्मदित्यत्र नार्थग्रहणमिष्यते ।
तत्रापि सत्तोपादित्वान्नैव तुल्यार्थताभ्रमः ॥ ३२७ ॥
त्यदादित्वाच्च शेषोऽस्य सर्वैः किं शब्दवर्जनम्[1] ।
[2]उदीचां वृद्धादगोत्रादिति पाक्षिकफिञ्विधेः ॥ ३२८ ॥
अणा च भवतोऽपत्ये भावतायनि भावतौ ।
भावत्को भवदीयश्च भवतष्ठक्छसोः स्मृतः ॥ ३२९ ॥
शतुस्तु भवतेः सिद्धादवृद्धादणि भावतः ।
पूर्वपाठाश्रये त्वं च भवांश्चेति युवां भवेत् ॥ ३३० ॥
आवामिति स्यादहं च भवांश्चेति सहत्वतः ।
इतराभ्योऽपि दृश्यन्त इत्यत्र [2]दृशिशब्दनात् ॥३३१॥
त्यदादेः प्रथमाद्यन्तात्प्रत्ययास्तसिलादयः ।
योगे स्युर्भवदादीनां स भवान् हि ततो भवान् ॥३३२॥
[3]अव्ययानां सर्वनाम्नामपि प्राक्टेरकज्विधौ ।
अज्ञातादिष्विहार्थेषु भवकानिति कथ्यते ॥ ३३३ ॥
भवादृशो भवादृक्च भवादृक्ष इति त्रयम् ।
[4]आ सर्वनाम्न इत्यात्वे कञ्क्विन्क्सेषु यथाक्रमम् ॥३३४॥
एवं त्यदादिष्वन्येषु रूपाण्यूह्यानि कोविदैः ।
सर्वनाम त्यदादित्ववृद्धत्वोपनिबन्धनम् ॥ ३३५ ॥
कार्यजातमितोऽन्यत्राप्यूहनीयं यथोचितम् ।

**कठिचकिभ्यामोरन् ॥ १-६२ ॥**

कठोरः कठिने पूर्णे चकोरस्तु खगान्तरे ॥ ३३६ ॥

**किशोरादयश्च ॥१-६३॥**

किशोरस्त्वश्वशावे स्यात्तरुणावस्थसूर्ययोः ॥
तैलपर्णौषधौ चापि सहोरस्तु क्षमावति ।
एवं किशोरादयोऽमी विज्ञातव्या विशारदैः ॥ ३३७ ॥

१. Pā. VII-ii-102.
२. Pā. IV-i-157.
३. Pā. V-iii-71.
४. Pā. VI-iii-91.

1. The original reads शब्दमं…न्.
2. The original omits दृशि.

**कपिगडिगण्डिकटिपटिभ्य ओलच्॥१-६४॥** "कपिगडिगण्डिकण्डिपटिभ्य ओलच्" इति केचित् पठन्ति

गण्डस्थले कपोलो नाथ गडोलश्च गण्डोलः ।
द्वावपि कथितौ गुडके स्याद्वरटायां तु गण्डोली ॥३३८॥

कटोलस्त्रिषु कट्वर्थः पटोलं तु पटान्तरे ।
ओषधौ ना पटोलीति ज्योत्स्निकायां निगद्यते ॥३३९॥

सूत्रे तुर्यः कण्डिरिति कैश्चिदुक्तो मदार्थकः ।
तदा कण्डोल इत्यासीच्चण्डाले पिटकेऽपि च ॥३४०॥

बहुलोक्तेस्तु कल्लोलो हर्षोल्लोलरिपुष्विह ॥

**मीनातेरूरन् ॥ १-६५ ॥** मयूरो बर्हिचूडायामपामार्गे शिखण्डिनि ॥ ३४१ ॥

**स्यन्देस्संप्रसारणं च ॥ १-६६ ॥**

सिन्दूरस्तरुभेदे ना रक्तचूर्णे तु न द्वयोः ।
सिन्दूरी रोचनारक्तवेल्लिकाधातकीषु च ॥ ३४२ ॥

**सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ १-६७ ॥**

अष्टौ धातवः ॥

वरणालिप्रकारेषु सेतुस्तन्तुर्गुणेऽन्वये ।
वरतन्तुर्मुनौ तत्र तित्तिरीत्यादिसूत्रतः[1] ॥ ३४३ ॥

तच्छा[2]खाध्यायिनो वारतन्तवीयाश्छणि स्मृताः ।
ह्वावामश्चे[3]त्यणि भवेत् तन्तुवायः कुविन्दके ॥ ३४४ ॥

अपत्ये तान्तुवाय्यः स्यात्सेनान्तेत्या[4]दिना ण्यतः ।
तान्तुवायि[5]रुदीचामिञिति सूत्रान्तरादिञि ॥ ३४५ ॥

पान्थे गन्तुरयं स्यादाङ्पूर्वकः सन्गृहागते ।
मस्तु मण्डे सक्तुशब्दश्चूर्णार्थोऽभिहितोऽस्त्रियाम्॥३४६

चरव्यवदिहापि[6] स्यात्सक्तव्यः सक्तवे हितः ।
सिध्मादि[7]गणपाठेन सक्तुलस्तद्वति स्मृतः ॥ ३४७ ॥

१. Pā. IV-iii-102.
२. The original omits तच्छा.
३. Pā. III-ii-2.
४. Pā. IV-i-152.
५. The original omits तान्तुवायि.
६. IV-i-153.
७. Pā. V-ii-97.

गुडादिभ्यः ष्ठञि भवेत्साधुः सक्तुषु साक्तुकः ।
ओतुर्बिडाले स्थूलोतुः स्थूलौतुरिति च द्विधा ॥ ३४८ ॥

स्यात्समासेऽथ धातुर्ना श्लेष्मरक्तरसादिषु ।
इन्द्रियेष्वश्मविकृतौ शब्दयोनौ च वर्तते ॥ ३४९ ॥

भूतेषु तद्गुणेष्वेवं विशेषादस्ति गैरिके ।
लोहे स्वभावे स्वर्णेऽथ पुंसि क्रोष्टा सृगालके ॥३५०॥

सृगाल्यां तु भवेत्क्रोष्ट्री तृज्वद्भावानुशासनात् ।
यतो रूपातिदेशोऽयमृन्नेभ्यो ङीप् ततो भवेत् ॥३५१॥

पः किच्च ॥ १-६८ ॥ पीतुर्हस्त्यग्निसूर्येषु पुंसि क्लीबं तु चक्षुषि ॥

अर्तेश्च तुः ॥१-६९॥ किच्चेत्यनुवर्तते ॥

स्त्रीणां च कुसुमे काले मानभेदेऽप्यृतुः स्मृतः ॥३५२॥

वायव्यवदृतव्योऽत्र देवतार्थे यति स्मृतः ।
प्राप्तोऽस्यर्तुरिति त्वर्थे स्यादार्तवमृतोरणि ।
ऋत्विग्दधृक्स्रग्दिगिति क्विन्प्रत्ययनिपातनात् ॥३५३॥

ऋत्विग्भ्यां घखञाविति सूत्रेणात्र खञ्विधानवशात् ।
यजमान आर्त्विजीनः तत्कर्मार्हेऽर्थे वार्तिकादृत्विक् ॥३५४

कमिमनिजनिगाभायापाहिभ्यश्च ॥१-७०॥ अष्टौ धातवः । किदिति निवृत्तम् ॥

कन्तुः कुसूले कन्दर्पे हृदये कामुके च ना ।
प्रागेर्वाजिदृशीत्यादिनाप्रत्ययविधौ तुकि ॥ ३५५ ॥

सिद्धोऽपि कन्तुशब्दोऽत्र रीतिभेदेन साधितः ।
मन्तुः पुंस्यपराधे च मनुष्येऽपि प्रजापतौ ॥ ३५६ ॥

१. Pā. IV-iv-103.
२. Pā. VII-i-95.
३. Pā. IV-i-5.
४. Pā. V-i-105.
५. Pā. III-ii-59.
६. Pā. V-i-71.
७. Vā. V-i-71.
८. Un. I-25

सुमन्तुर्व्यासशिष्ये ना सुजने च प्रकीर्तितः ।
जन्तुः प्राणिनि गातुस्तु भृङ्गे पुंस्कोकिलेऽपि च ॥३५७॥
गन्धर्वे गायके चाथ भातुः सूर्याग्निदीप्तिषु ।
यातुर्ना पथिके काले यामे क्लीबं तु रक्षसि ॥ ३५८ ॥
त्रिषु स्याद्रक्षके पातुर्हेतुर्ना कारणे स्मृतः ॥

**चायः किः ॥१-७१॥** केतुर्ध्वजे गृहे चिह्ने किरणोत्पातवह्निषु ॥ ३५९ ॥
सुकेतुर्यक्षभेदे स्यात्तालकेतुस्तु राक्षसे ॥

**आप्नोतेर्ह्रस्वश्च ॥१-७२॥** अप्तुर्योनावभीष्टार्थे शरीरे च क्रतावपि ॥ ३६० ॥
अभीष्टार्थप्रापकत्वादप्तोर्यामो मखान्तरे ।
स्यादाप्तोर्यामिकी तस्य दक्षिणाठञ्विधानतः ॥ ३६१ ॥
यज्ञाख्येभ्य इतोऽन्यत्राप्येवमेवोह्यतां बुधैः ॥

**वसेस्तुन् ॥ १-७३ ॥** वस्तु प्रमेयेऽप्याख्यातं परमार्थेऽपि न द्वयोः ॥ ३६२ ॥

**अगारे णिच्च ॥ १-७४ ॥** पुंनपुंसकयोर्वास्तु सुरङ्गायां निकेतने ।
शाकभेदे पुरे सीम्नि गृहभूमौ च कथ्यते ॥ ३६३ ॥
वास्तोष्पतिर्देवतास्येत्यर्थेऽस्मिन् छयतोर्विधेः ।
वास्तोष्पतीयमिति च वास्तोष्पत्यमिति क्रमात् ॥३६४
चतुरर्थ्यां सुवास्त्वादिभ्योऽणि सौवास्तवो भवेत् ॥

**कृञः क्रतुः ॥ १-७५ ॥** मुनिभेदे क्रतुः पुंसि संकल्पेऽप्यध्वरेऽपि च ॥ ३६५ ॥
पूतक्रतुस्तत्र पूतो यया वा येन वा क्रतुः ।
पुंयोगे तु भवेत्पूतक्रतायीत्यैत्वङीब्वशात् ॥ ३६६ ॥

**एधिवह्योश्चतुः ॥१-७६॥** एधतुः पुरुषेऽथाग्नौ वहतुर्वृषपान्थयोः ।
विवाहकाले पित्राद्याल्लब्धे कन्याधनेऽपि च ॥ ३६७ ॥

**जीवेरातुः ॥ १-७७ ॥** जीवातुरस्त्रियां धर्मे जीवनेऽन्ने कृषीवले ।

**आतृकन् वृद्धिश्च ॥ १-७८ ॥** जैवातृकश्चन्द्रभिषगायुष्मत्सु कृषीवले ॥ ३६८ ॥

१. Pā. V-i-95. २. Pā. IV-ii-77.

**कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥१-७९॥** षड् धातवः ॥

कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः ।
नद्याश्शेषस्येति सूत्रे कृन्नद्याः प्रतिषेधतः ॥ ३६९ ॥

घैरूपादौ परे नैव ह्रस्वः कर्षूतरादिषु ।
एवं लक्ष्मीतरादौ च ह्रस्वो नेत्यवगम्यताम् ॥ ३७० ॥

ओर्देशे ठञि नैषादकर्षुको दाक्षिकर्षुकः ।
इहस्यादिषु[?]सूक्तान्तात्को ह्रस्वः केऽणे इत्यपि ॥३७१॥

चमूः सेनाचमसयोः शरीरे तु तनूरिति ।
धनूर्धान्यादिनिचये नितम्बिन्यामपि स्त्रियाम् ॥ ३७२ ॥

कार्मुके चाथ कथिता सर्जूर्वणिजि विद्युति ।
स्त्रियां स्वर्गे विधौ रुद्रेऽप्यथ खर्जूर्निगद्यते ॥ ३७३ ॥

कीटान्तरे च पामायां खर्जूरीपादपेऽपि च ।

**मृजेर्गुणश्च ॥ १-८० ॥** स्त्रियां मर्जूः स्मृता शुद्धौ धावके पुंसि कथ्यते ॥३७४॥

**वहेर्धश्च ॥ १-८१ ॥** वधूः स्नुषा नवोढा स्त्री भार्याप्टक्काङ्गनासु च ।

**कषेश्छ च ॥ १-८२ ॥** कच्छूरिति स्त्रियां पामासमानार्थो निगद्यते ॥ ३७५ ॥

कच्छ्वाह्रस्वत्ववचनान्मत्वर्थीये तु कच्छुरः ।
ह्रस्वमध्यो मेद्यलिङ्गो रोदस्यां कच्छुरा स्त्रियाम् ॥३७६॥

**णित्कसिपद्यर्तेः ॥ १-८३ ॥** कासूर्विकलवाचि स्यात्कुधीशक्त्यायुधामये ।
कासूतरा तु कथिता ह्रस्वा सैव ष्वरज्च[तरञ्व]शात् ॥

पादूरुपानहि स्थाल्यामारूः पिङ्गलवृक्षयोः ॥

**अणो डश्च ॥ १-८४ ॥** आडूस्तु कथ्यते धीरैः जलप्लवनसाधने ॥ ३७८ ॥

**नञि लम्बेर्नलोपश्च ॥ १-८५ ॥** स्त्रियामलाबूशब्दोऽयं तुम्बिकायां निगद्यते ।
अलाबूनां रजो यत्तु तदलाबूकतं स्मृतम् ॥ ३७९ ॥

१. Pā. VI-iii-44.
२. Pā. VI-iii-43.
३. Pā. IV-ii-119.
४. Pā. VII-iv-13.

के श्र एरङ् चास्य ॥ १-८६ ॥

कशेरूर्ना विदर्यां च तृणकन्देऽपि च स्त्रियाम् ।
उप्रत्ययाद्बाहुलकात्कशेरुर्नकुलेन्द्रयोः ॥ ३८० ॥

कर्णिकारे वसावेण्यां शक्रकोपे गणेऽपि च ॥

ओ डुट् च ॥ १-८७ ॥

डुक् चेति केचित् ॥
तर्डूर्द्रोणिप्लवे दर्व्यां डुक्पाठे सौत्रचाद्गुणः ॥ ३८१ ॥

दरिद्रातेर्यालोपश्च ॥ १-८८ ॥

भवेद्बाहुलकोक्तेर्वा डुट्पाठस्तु सुपेशलः ।
दद्रूर्दर्द्रूस्तथा दर्दूरिति कुष्ठे त्रयं स्मृतम् ॥ ३८२ ॥

व्याख्याभेदाद्दरिद्रातेर्यालोपश्चेति सूत्रजात् ।
मृगय्वादिषु पाठेन तत्र दद्रुरिति स्मृता ॥ ३८३ ॥

अत्र शैाकीपलालीति पामादिगणसूत्रतः ।
ह्रस्वत्वे दीर्घभाजोऽपि दद्रुणो दर्द्रुरोगिणि ॥ ३८४ ॥

नृतिशृध्योः कूः ॥ १-८९ ॥

नृतूर्नटे क्रिमौ दीपे श्रृधूर्दीनोक्त्यपानयोः ।

ऋतेरम् च ॥ १-९० ॥

रतूः पान्थे सत्यवाचि देवनद्यां च कथ्यते ॥ ३८५ ॥

अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥ १-९१ ॥

षट् शब्दाः । "अन्दूदृम्भूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः" इति केचित्सप्त शब्दान् पठन्ति ॥

अन्दूः स्त्रियां स्यान्निगले प्रभेदे भूषणस्य च ।
केऽपि केऽर्णे इति ह्रस्वेऽप्यन्दुकोऽत्र निगद्यते ॥३८६॥

स्वार्थिकानां प्रकृतितः क्वचिल्लिङ्गातिवर्तनात् ।
स्त्रीलिङ्गादपि संज्ञायां कनि पुंलिङ्गता दृढा ॥ ३८७ ॥

अदि बन्धन इत्यस्मान्निष्पत्तावर्थ ईदृशः ।
अमेर्दुगागमेऽप्याहुर्बुद्धिवाचक इत्यमुम् ॥ ३८८ ॥

१. Uṇ. I-37.
२. Gaṇasūtra 12 under Pā. V-ii-100.
३. Pā. V-ii-100.
४. Pā. VII-iv-13.

दृम्भूशब्दो दृभी ग्रन्थ इति धातोस्तुदादिजात् ।
गुरुबाहुलके सिद्धः स तु सन्दर्भकर्तरि ॥ ३८९ ॥

कथके चास्य रूपाणि हूहूशब्दवदूचिरे ।
अन्ये तु दृढशब्दस्योपपदस्य सतो दृशम् ॥ ३९० ॥

आदेशयन्तो भूधातोराहुः कूप्रत्ययं बुधाः ।
यद्वा दृढार्थकं नान्तमव्ययं दृन्निति श्रिताः ॥ ३९१ ॥

भवतेरेव तस्यार्थान् तरुसर्पकपीन् विदुः ।
समं प्रकृत्युवर्णेन दीर्घोऽप्यत्र निपातनात् ॥ ३९२ ॥

[१]चिश्नुधात्विति प्राप्तो न बाध्येतोवङन्यथा ।
अव्यये दृन्युपपदे हिंसार्थे भवतेः क्विपम् ॥ ३९३ ॥

मन्वानः श्रीपतिर्ब्रूते दृन्भूर्हरिरिति स्फुटम् ।
द्वितीयोष्ठ्यान्वितं पाठमत्र केचिद्वितेनिरे ॥ ३९४ ॥

मेदिन्यादिनिघण्टूक्तिविरोधान्नैतदादृतम् ।
[२]दृन्करेति यणादेशे सति वार्तिकशासनात् ॥ ३९५ ॥

[३]वर्षाभूवदिदं रूपाण्युन्नेयानि स्वया धिया ।
जम्बूर्जनेर्जमेर्वा स्यात्कूप्रत्ययबुकोः सतोः ॥ ३९६ ॥

वृक्षभेदे बाहुलकादपि ह्रस्वान्तता क्वचित् ।
ओर्[४]ञा जाम्बवो ग्रामो जम्बुदूरभवः स्मृतः ॥ ३९७ ॥

ततो [५]जाम्बवशालूकिन्याविति द्वन्द्वैकता ।
विशिष्ट[६]लिङ्गसूत्रे खल्वग्रामा इति वर्तते ॥ ३९८ ॥

जम्बा विकारे तु वाच्यवत्स्याद्द्वेरञि जाम्बवम् ।
फले तु कथितं धीरैर्जम्[७]ब्वावेत्यणि जाम्बवम् ॥ ३९९ ॥

१. Pā. VI-iv-77.
२. Vā. VI-iv.84.
३. Pā. VI-iv-84.
४. Pā. IV-iii-139.
५. Mahābhāṣya. II-iv-7.
६. Pā. II-iv-7.
७. Pā. IV-iii-165.

अणः फले लुकि त्वस्य जम्बुर्ह्रस्वो नपुंसके ।
[1]प्राणिजातेश्चारज्ज्वादेरित्युक्तस्य वार्तिके ॥ ४०० ॥

[2]लुक् तद्धितलुकीति स्त्रीप्रत्ययस्यात्र लुक् स्फुटः ।
[3]लुप् चेत्यणो लुपि भवेज्जम्बूः स्त्रीयुक्तवद्विधेः ॥ ४०१ ॥

श्लेष्मातके कफेलुः स्यात् कर्कन्धूर्बदरे तरौ ।
दिधिषूस्तु द्विरूढायां कलत्रेऽपि कनीयसि ॥ ४०२ ॥

जम्बूकफेलुमध्येऽत्र कम्बूः कैश्चन पठ्यते ।
स च धीरैः प्रकथितः परद्रव्यापहारिणि ॥ ४०३ ॥

मृग्रोरुतिः ॥ १-९२ ॥ मरुद्वातादिदेवेषु प्र[4]ज्ञाद्यणि तु मारुतः ।
अव्युत्पन्नो मरुत इत्यदन्तोऽप्येतदर्थकः ॥ ४०४ ॥

कविप्रयोगानुसारात् संसारावर्तदर्शितः ।
मरुतः पुंसि मत्वर्थे तः पर्वेत्यादि तद्विधेः ॥ ४०५ ॥

मरुत्वान् मतुपा चक्रे वत्वं तु [5]झय इत्यतः ।
भत्वाज्जश्त्वं च न भवे[6]त्तसौ मत्वर्थ इत्यतः ॥ ४०६ ॥

[7]द्यावापृथिव्यादिसूत्राद्देवताच्छयतोरतः ।
भवेन्मरुत्वतीयं च मरुत्वत्यमिति क्रमात् ॥ ४०७ ॥

गरुत्पक्षे [8]यवादित्वाद्गरुत्मानिति तु श्रुतिः ।

ग्रो मुट् च ॥ १-९३ ॥ गर्मुत्के खगे सूर्ये लताधान्यतृणान्तरे ॥ ४०८ ॥

हृषेरुलच् ॥ १-९४ ॥ मृगे च कामुके चैव हर्षुलः परिकीर्तितः ।
अत्र सूत्रे विपश्चिद्भिः साधितो बहुलोक्तिभिः ॥ ४०९ ॥

चटुलश्चञ्चले कान्ते दुराधर्षे भयानके ॥

१. Vā IV-i-66.
२. Pā. I-ii-49.
३. Pā. IV-iii-166.
४. Pā. V-iv-38.
५. Pā. VIII-ii-10.
६. Pā. I-iv-19.
७. Pā. IV-ii-32.
८. Pā. VIII-ii-9.

हृसृरुहियुषिभ्य इतिः ॥ १-९५ ॥ युषिः सौत्रः ॥

[1]हरिर्दिशि मृगे वायौ तृणे वर्णेऽर्कवाजिषु ॥ ४१० ॥
सरिन्नद्यां स्मृता रोहिन्मृग्यां वल्लीभिदि स्त्रियाम् ।
पुंसि त्वेष भवेत्सूर्ये स्मृता योषित्तु सुभ्रुवाम् ॥ ४११ ॥
युषिधातुरसौ सौत्रः प्रायेणोणादिगोचरः ॥

ताडेर्णिल्लुक् च ॥ १-९६ ॥ तृतीयमध्यस्तु तडिच्छब्दः स्याद्विद्युति स्त्रियाम् ॥४१२॥

शमेर्ढः ॥ १-९७ ॥ शण्ढस्तृतीयप्रकृतावाकृष्टाण्डे च गोपतौ ।
अपि वर्षवरे प्रोक्तो युतौ ना वन्ध्यपूरुषे ॥ ४१३ ॥
ढस्येत्संज्ञाथ वाप्येयादेश इडेह वर्तिनः ।
सर्वं बाहुलकादेव न प्राप्नोतीति निर्णयः ॥ ४१४ ॥
उत्तरत्राप्येवमेव जैमन्ताड्डादिषु स्थितिः ।
मूर्धन्यादिमिमं प्राह षणेर्दानार्थकात्परः ॥ ४१५ ॥

कमेरठः ॥ १-९८ ॥ सुन्दरे कच्छपे खर्वे कमठः पुंसि कथ्यते ।
भिक्षापात्रे तु कमठमिति प्राहुर्नपुंसकम् ॥ ४१६ ॥
जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत् ।
जीर्णेऽप्यसौ बाहुलकादठप्रत्ययतो भवेत् ॥ ४१७ ॥

रमेर्वृद्धिश्च ॥ १-९७ ॥ सहस्रवेधिनि प्रोक्तं रामठं न द्वयोर्बुधैः ॥

शमेः खः ॥ ९९ ॥ शङ्खः स्यान्निधिभेदेऽपि सर्पभेदे नखेऽपि च ॥ ४१८ ॥
ललाटास्थ्नि च ना न स्त्री संख्यावलयकम्बुषु ।
ठकि शिल्पमिति प्रोक्तः शाङ्खिकः कम्बुध्मापके[4] ॥

कणेष्ठः ॥ १-१०० ॥ कण्ठो गले समाधाने ध्वनौ मदनपादपे ।
कम्बुकण्ठीत्यादिसिद्ध्यै कठान्तात्स्वाङ्गलक्षणम् ॥ ४२० ॥

१. The original here adds:—अजिरः क्षीरविकृतौभाजनेऽन्यर्कयातुषु ॥ अजिरशिशिरशिथिलखदिराः । सप्त शब्दाः । अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले ।

२. Un. Sūtra. I-107.

३. Pā. IV-iv-55.

४. The original reads धावने.

ङीषमाहुर्वृत्तिकारा नैतद्वेद मुनित्रयी ।
एवमेव स्थितिर्वक्ष्यमाणयोरङ्गगात्रयोः ॥ ४२१ ॥

कलस्तृपश्च ॥१-१००॥ तृपला त्रिफलायां च लतायामपि कथ्यते ।
प्राङ्निर्देशात्प्रत्ययस्य ततोऽन्यत्रापि दृश्यते ॥ ४२२ ॥

कुण्डलं मण्डलं चेत्याद्यूह्यमेतेन कोविदैः ।
कुण्डलं पाशवलयकर्णभूषासु कथ्यते ॥
गलूच्यां काञ्चनालौ च कुण्डली समुदीरिता ॥ ४२३ ॥

स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ।
कुष्ठप्रभेदेऽप्युपसूर्यके च भुजाप्रदेशेषु च मण्डलं स्यात् ॥

इतोऽन्येऽपि प्रयोगानुसारादूह्याः कलस्थले ।

शपेर्वश्च ॥१-१०१॥ शबलो वर्णभेदेऽपि मिश्रितेऽपि च वाच्यवत् ॥ ४२५ ॥

वृषादिभ्यश्चित् ॥ ॥ १-१०२ ॥ हये शूद्रेऽपि वृषलः कथितः पुंस्यथ स्त्रियाम् ।
वृषल्यृतुमती कन्या शूद्रा वन्ध्या मृतप्रजाः ॥ ४२६ ॥

पललं तिलचूर्णे च टङ्के मांसे नपुंसकम् ।
यातुधाने त्वयं पुंसि सरलस्तु द्रुमान्तरे ॥ ४२७ ॥

त्रिष्ववक्रेऽप्युदारे च देवलो देवजीवके ।
तरलश्चञ्चले षिद्गे हारमध्यमणावपि ॥ ४२८ ॥

भासुरे चाथ तरला यवागूसुरयोर्मता ।
प्रत्ययस्यात्र कित्वेऽपि ज्ञेयो बाहुलकाद्गुणः ॥४२९ ॥

कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि ।
उत्तरीयेऽप्यथ क्लीबं कम्बलं सलिले स्मृतम् ॥ ४३० ॥

सुसिद्धोऽभूदयं बिम्बः कमेर्बाहुलके बुकि ।
ऊर्णापलशते प्राहुः कम्बल्यं सांज्ञिके यति ॥ ४३१ ॥

१. Pā. V-1-3.

द्वाभ्यां कम्बल्याभ्यां क्रीता स्त्री स्यात् द्विकम्बल्या ।
द्विगुङीपोऽपरिमाणेत्यादिनिषेधेन तद्धितस्य लुकि॥४३२॥
असंज्ञायां कम्बलीया स्यादूर्णौत्सर्गिकच्छतः ।
पाण्डुकम्बलमुदिते रथे [लसंवीते रथे] स्यात्पाण्डुकम्बली॥
अयोऽग्रे पुंसि च क्लीबे मुसलं स्यात्स्त्रियां त्वसौ ।
तालमूल्यामाखुपर्णीगृहगोधिकयोरपि ॥ ४३४ ॥
दन्त्यमूर्धन्यतालव्यान्ततया मतभेदतः ।
मुस खण्डन इत्यस्य पाठाज्जातोऽप्ययं त्रिधा ॥ ४३५ ॥
मुसल्यो मुसलीयश्च पामा[श्चापूर्वा]दित्वेन यच्छयोः ।
प्राक्क्रीतीयेष्विहार्थेषु कथितावभिधेयवत् ॥ ४३६ ॥
लाङ्गली जलपिप्पल्यां लाङ्गलं कुसुमान्तरे ।
ताले हले तृणे राजगृहदारुभिदोर्जले ॥ ४३७ ॥
दीर्घो बाहुलकादन्यधातोरनुमतो बुधैः ।
ग्रहेरस्मिन्नुपपदेऽच्प्रत्ययाल्लाङ्गलग्रहः ॥ ४३८ ॥
कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे ।
तृतीयान्तात्कुड इत्येतेष्वर्थेषु परे जगुः ॥ ४३९ ॥
मूर्च्छायां कश्मलं क्लीबं कोमलं मृदुले जले ।
कुड्मलादिषु मुड्बाहुलकादस्मिन्गुणोऽप्यसौ ॥ ४४० ॥
देशभेदे बाहुलकात्स्यातां कोसलकोशलौ ।
अपत्ये कोसलस्यार्थे तात्स्थ्यात्क्षत्रियवाचिनः ॥ ४४१ ॥
स्याद्वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङतो यदि ।
स्त्रीत्वे सिध्यति कौसल्या यङश्चाबिति चाब्वशात्॥४४२॥
वृद्धेत्सूत्रे दन्त्यपाठः कोसले साम्प्रदायिकः ।
संबलोऽस्त्री शम्बलवत्कूलपाथेयमत्सरे ॥ ४४३ ॥

१. Pā. IV-i-21.
२. Pā. IV-i-22.
३. Pā. IV-ii-11.
४. Pā. V-i-4.
५. Pā. IV-i-171.
६. Pā. IV-i-74.

कदली वैजयन्त्यां च रम्भायां हरिणान्तरे ।
कदला शाम्बरीपुत्रीबिम्बिकासु च कथ्यते ॥ ४४४ ॥
आह्वानार्थकदेरत्र नलोपः प्राग्वदूह्यताम् ।
अजादिराकृतिगणः कदलायां ततोहि टाप् ॥ ४४५ ॥
गौरादिङीषि कदलीत्येवमत्र विचिन्त्यताम् ।
पिङ्गलः स्यान्मुनौ रुद्रे चण्डांशोः पारिपार्श्वके ॥४४६॥
विधिभेदे कपावग्नौ कपिले त्वभिधेयवत् ।
स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च ॥४४७॥
हिसार्थपिञ्जेर्न्यङ्क्वादिपाठात्कुत्वमिहागतम् ।
सौत्रादत्र कुशेर्धातोः कुशलः शिक्षिते त्रिषु ॥ ४४८ ॥
क्षमे च सुकृते चाथ पर्याप्तौ स्यान्नपुंसकम् ।
कुशान् लातीति कुशलमित्यप्याहुरिमं बुधाः ॥४४९॥
तत्र रूढेर्यौगिकार्थापहारित्वं प्रचक्षते ।
ब्राह्मणादौ युवादौ च पाठादस्य गणद्वये ॥ ४५० ॥
कौशल्यं कौशलमिति द्विधा स्याद्भावकर्मणोः ।
धावेर्बाहुलकाद्ध्रस्वे स्यादत्र धवला गवि ॥ ४५१ ॥
वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे ।
कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे ॥ ४५२ ॥
शस्त्राणां छुरिकादीनां हेमाद्यैश्चिह्निते‌ऽजिने ।
मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः ॥ ४५३ ॥
पटलं नेत्ररोगे च तिलके च परिच्छदे ।
छदिष्वपि समूहे च मणीनामपि दूषणे ॥ ४५४ ॥

१. Pā. IV-1-4.
२. Pā. IV-1-41.
३. Ksirasvāmin on Amara I-iii-26.
३. Pā. V-1-124.
४. Pā. V-1-130.

छलन्तु स्खलिते व्याजे छ्यतेरालोपसंभवात् ।
वृषादिभ्यश्चिदित्येवं स्वरभेदाय दर्शिते ॥ ४५५ ॥

गणेऽस्मिन् तादृशोऽन्येऽपि विज्ञेयाः प्रतिपत्तृभिः ।
मलोऽस्त्री पापविट्किट्टे कृपणेऽप्यभिधेयवत् ॥ ४५६ ॥

मृजेष्टिलोपश्च ॥ १-१०३ ॥

ज्योत्स्नातमिस्रासूत्रेण मत्वर्थीये निपातनात् ।
मलयुक्ते वाच्यलिङ्गं मलिनं च मलीमसम् ॥ ४५७ ॥

चुपेरच्चोपधायाः ॥ १-१०४ ॥

चपलः पारदे मीने चोरके प्रस्तरान्तरे ।
चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च ॥ ४५८ ॥

नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले स्मृतम् ।
चापल्यं चापलमिति स्यादस्मात्कुशलाद्यथा ॥ ४५९ ॥

शकिशम्योर्नित् ॥ १-१०५ ॥

शकलं त्वचि खण्डे च रागवस्तुनि वल्कले ।
शकलो मुनिभेदे स्याद्गर्गादिगणदर्शितः ॥ ४६० ॥

ष्फाणोश्च सिद्धये मध्ये पठितः कतकण्वयोः ।
सिद्धं द्वयमिदं शाकल्यायनिः शाकलश्च यत् ॥ ४६१ ॥

साधारणं यञाद्यत्र गर्गशब्दे प्रवक्ष्यते ।
अस्मादिनौ त्वग्वचनात्पाठीने शकली स्मृतः ॥ ४६२ ॥

असौ तु यो रागवस्तुवचनो वर्तते ततः ।
तेन रक्ते शाकलिकः शाकलष्ठगणोः क्रमात् ॥ ४६३ ॥

शमलं पापशकृतोः क्लीबं स्यादशुकात्रिषु[?] ।

छो गुक्ह्रस्वश्च ॥ १-१०६ ॥

छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके ॥ ४६४ ॥
छागमातरि भैषज्ये कैतवे तु पुमानयम् ।

१. Uṇ. sūtra I-102.
२. Pā. V-ii-114
३. Pā. IV-i-105.
४. Pā. IV-ii-1.

प्रज्ञादित्वादणि भवेदत्र छागल इत्यपि ॥ ४६५ ॥

मत्वर्थीये इनौ त्वत्र छगलाच्छागली मुनौ ।
एतत्प्रोक्तमधीयाना जनाः छागलिनेयिनः ॥ ४६६ ॥

विकर्णशुङ्गछगलादित्यत्र छागलोऽण्वशात् ॥

अमन्ताड्डः ॥ १-१०७ ॥ अमन्तेभ्यस्तु धातुभ्यो डप्रत्ययविधानतः ॥ ४६७ ॥

शब्दाः स्युर्दण्डरण्डाद्याः ज्ञेयास्ते च प्रयोगतः ।
प्रत्ययादेर्डकारस्य नेत्त्वं बाहुलकादिह ॥ ४६८ ॥

षः प्रत्ययस्येति योगाच्चुटू इति पृथक्कृतेः ।
प्रश्लेषाद्वा यकारस्य चुञ्चुपश्चणपो यथा ॥ ४६९ ॥

दण्डोऽस्त्री मदहिंसासेनालगुडेषु शासने राज्ञाम् ।
मण्डे मानविशेषे व्यूहे रविपारिपार्श्विके यष्टौ ॥ ४७० ॥

दण्डमर्हति यस्तत्र दण्ड्यः स्यादभिधेयवत् ।
निपातनाट्टिलोपो न दाण्डिनायनसूत्रतः ॥ ४७१ ॥

नडादित्वात्फगेतस्मादथवोक्तनिपातनात् ।
दण्डः प्रहरणं तस्यां दण्डा क्रीडा हि सा णतः ॥ ४७२ ॥

दण्डपातः क्रियास्यां चेद्दाण्डपातेति अस्त्रियाम् ।
द्वाभ्यां प्रवृत्तं दण्डाभ्यां द्विदण्डि तदुदाहृतम् ॥ ४७३ ॥

द्विदण्ड्यादिभ्यश्चसूत्रादिच्समासान्तवर्तकात् ।
दण्डयुक्ताजिनं दण्डाजिनं दम्भार्थकं ततः ॥ ४७४ ॥

स्याद्दाण्डाजिनिकस्तेनान्विच्छतीत्यर्थके ठञि ।

१. Pā V-iv-38.
२. Pā. IV-i-117.
३. Pā. I-iii-6.
४. Pā. I-iii-7.
५. Pā. VI-iv-174.
६. Pā. IV-i-99.
७. Pā. V-iv-128.
८. Pā. V-ii-76.

रण्डा मूषकपर्ण्यां च विधवायां च योषिति ॥ ४७५ ॥

खण्डोऽस्त्री शकलेनेक्षुविकारमणिभेदयोः ।
पूर्वान्वयेन वा पुंसीत्यस्यामरनिबन्धने ॥ ४७६ ॥

व्याख्यातारः खण्डशब्दं द्विलिङ्गं शकले जगुः ।
मत्वर्थीये ठनि भवेत्खण्डिकः खण्डपाठके ॥ ४७७ ॥

हरेणौ खण्डिका स्त्री स्यात्खण्डा वा खण्डिका कनि ।
खैण्डिकादिभ्यश्च नषुञा[सूत्रादञा] खाण्डिकमुच्यते ॥४७८॥

तत्प्रोक्ताध्यायिनः खाण्डिकीयाश्छण्प्रत्यये स्मृताः ।
मण्डं मस्तुनि शाके च मण्डः स्यात्सारपिच्छयोः ॥ ४७९ ॥

एरण्डे भूषणे चाथ मण्डा धात्र्यामुदाहृता ।
मण्डा तु पांसुलायां स्त्री त्रिपु हस्तादिवर्जिते ॥ ४८० ॥

अण्डः खगादिकोशे स्यान्मुष्के वीर्येऽपि च क्वचित् ।
आण्डिरस्तद्युते काण्डैाण्डादीरन्नीरचोर्विधेः ॥ ४८१ ॥

षण्डं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान् ।
दानार्थकः स्यात् त्र[कात् स्यात्तु] षणेः षस्य बाहुलकान्न षः[सः] ।
तालव्यादिमिमं प्राहुरपरे शमिधातुजम् ॥ ४८२ ॥

गण्डो व्रणे कपोले पिटके गर्वे मृगान्तरे योगे ।
मूलादिपृष्ठभागे हयभूषणबुद्बुदेऽप्युपाये च ॥ ४८३ ॥

चण्डो ना तिन्त्रिणीवृक्षे यमिकिङ्करदैत्ययोः ।
चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोषितोः ॥ ४८४ ॥

चण्डा धनहरीशङ्खपुष्प्योस्त्रिष्वतिकोपने ।
तीव्रेऽथ पण्डशण्डेऽपि बुद्धावेष स्त्रियां मतः ॥४८५॥

Amarakośa I-iii-16. Compare Bhānuji's commentary thereon.

२. Pā. IV-ii-45.

३. Pā. V-ii-111.

आद्यादपत्ये चाण्डाली[पाण्डारो]वक्रिमादौ[?]प्रकीर्तितः ।
आरकोरकि वक्तव्ये वचनादन्यतोऽप्यसौ ॥ ४८६ ॥

गीर्धाया द्रूग्विधावारगुँदीचामिति शासने ।
द्वितीयस्मात्तारैकादेः पण्डितो विदुषि स्मृतः ॥४८७॥

गमनैकस्वभाव[भावेऽपि] द्रमिडो देशभेदजे ।
नेड्वँशितीण्णिनिषेधस्तु नात्र बाहुलकाद्भवेत् ॥ ४८८ ॥

द्रमहम्मेत्निपठिताद्धातोरेष प्रसाधितः ।
गत्यर्थकाद्द्वितीयादेः फपन्दोऽपि [फणेः फण्डोऽपि] दृश्यते

अतः प्रैज्ञाद्यणि भवेत्फाण्डमित्युदरार्थकम् ।
किदयं कादिधातुभ्यः शिष्टोऽथप्रत्ययो यतः ॥ ४९० ॥

कादिभ्यः कित् ॥ १-१०८॥

कुण्डकाण्डादयः शब्दा विज्ञेयास्तत्र कोविदैः ।
कुण्डमग्न्यालये मानभेदे देवजलाजशये ॥ ४९१ ॥

कुण्डी कमण्डलौ जारात्पतिवत्नी सुते पुमान् ।
पिठरे तु न नाशब्दो प्रकृत्यर्थात्कुणेरसौ ॥ ४९२ ॥

कुण्डं प्रकुण्डपूरं च णमुलन्ताव्यये इमे ।
वर्षप्रमाण ऊलोपश्चेत्यादेरनुशासनात् ॥ ४९३ ॥

काण्डं नाले तरुस्कन्धे बाणेऽवसरनीरयोः ।
कुत्सिते रहसि स्तम्बे वर्गेऽप्येतदुदाहृतम् ॥ ४९४ ॥

कान्त्यर्थकात्कमेरेष दीर्घप्रासद्या निरूप्यते ।
काण्डीरः काण्डवत्युक्तो मत्वर्थीये सतीरनि ॥ ४९५ ॥

प्रकाण्डं न द्वयोः शस्ते तरुस्कन्धे तु न स्त्रियाम् ।
गोप्रकाण्डादयः प्रोक्ताः प्रशस्तेषु गवादिषु ॥ ४९६ ॥

१. Pā. IV-i-129.
२. Pā. IV-i-130.
३. Pā. V-ii-36.
४. Pā. VII-ii-8.
५. Pā. V-iv-38.
६. Pā. III-iv-32.

प्रशं[1]सावचनैश्चेति जातिशब्दसमासतः ।
गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः ॥ ४९७ ॥

गुडास्नुही च कथिता गुलिकायां च योषिति ।
स्नुहीसदृशकेशत्वाद्गुडाकेशश्शिवे स्मृतः ॥ ४९८ ॥

गुडे साधुर्गौडिकः स्यात् गुडादि[2]भ्यष्ठञीरणात् ।
भ्रमणार्थाद्घुणेर्घुण्डशब्दोऽत्र भ्रमरार्थकः ॥ ४९९ ॥

अत्र कुण्डादयः शब्दाः क्वादिभ्यः किदितीरिताः ।
गण्डशब्दोऽस्य विषयेऽप्यभूत्प्रागेव दर्शितः ॥ ५०० ॥

अनुनासिकलोपादिकित्कार्याणामदर्शनात् ।
साम्राज्यमेतद्बहुलग्रहणेनेति चिन्त्यताम् ॥ ५०१ ॥

गडिधातुरिदित्कश्चिदस्ति तस्मात्तु वा भवेत् ।
[3]अमन्तादित्यत्र सूत्रे पदं नैवानुवर्तते ॥ ५०२ ॥

अतो गुधातोरप्यासीद्गुडशब्दो न चेत्कथम् ।
एवमन्येऽपि धातुभ्यः क्वादिभ्यस्स्युर्यथोचितम् ॥५०३॥

**स्थाचतिमृजेरालज्वालजालीयचः ॥१-१०९॥**

उखायां पाटलायां च स्थाली स्थालं तु भाजने ।
बाधित्वा चित्स्वरं पक्षे भवेदस्याद्युदात्तता ॥ ५०४ ॥

इत्थमालच्प्रत्ययादिराकारस्स प्रयोजनः ।
पाकार्हत्वेन ये स्थालीबिलमर्हन्ति[4] ते पुनः ॥ ५०५ ॥

स्थालीबिल्याः स्मृताः स्थालीबिलीया अपि तण्डुलाः ।
चात्वालो यज्ञकुण्डेऽपि दर्भेष्वपि च विश्रुतः ॥ ५०६ ॥

मार्जालीयोऽनले रुद्रे बिडाले कायशोधने ॥

१. Pā. II i-66.
२. Pā. IV-iv-103.
३. Un. I-107.
४. Pā. V-i-70.

पतिचण्डिभ्यामालञ् ॥ १-११० ॥

पातालं भोगिलोके स्याद्विवरे बडबानले ॥ ५०७ ॥
क्रूरकर्मणि चण्डालो ब्राह्मण्यां शूद्रजेऽपि च ।
ईदित्वान्नुम्यदुपधत्वाभाद्वृद्धिरत्र न ॥ ५०८ ॥
प्रज्ञा[1]द्यणिति चाण्डालोऽप्यस्तीत्येके बभाषिरे ।
अ[3]न्ये त्वालनि पाताले वृद्धिं बाहुलकाज्जगुः ॥ ५०९ ॥
चण्डालात्स्वार्थकमणं छन्दस्याहुर्विचक्षणाः ।
स्त्रीत्वे शा[4]र्ङ्गरवादित्वाच्चण्डाली ङीनि कथ्यते ॥ ५१० ॥
चण्डालशब्दात्पुंलिङ्गादपत्येऽत्र विवक्षिते ।
चाण्डालकिरिति व्या[5]सवरुडेत्यादिवार्तिकात् ॥ ५११ ॥
ढक्प्रत्यये तु स्त्रीलिङ्गाच्चाण्डालेय इति स्फुटम् ॥

तमिविशिबिडिमृणिकुलिकपिपल्यट्टपञ्चिभ्यः कालन् १-१११ ॥

नव धातवः ॥
तमालस्तिलके खड्गे तापिञ्छे वरणद्रुमे ॥ ५१२ ॥
विशाला त्विन्द्रवारुण्यामुज्जयिन्यां च कथ्यते ।
नृपवृक्षभिदोः पुंसि विशालं पृथुलेऽन्यवत् ॥ ५१३ ॥
बिडालो नेत्रपिण्डे स्यान्मार्जारे च खगान्तरे ।
मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे ॥ ५१४ ॥
कुलालः कुम्भकारे स्यात्ककुभे कौशिकेऽञ्जने ।
कपालोऽस्त्री शिरोऽस्थि स्याद्घटादेश्शकले व्रजे ॥ ५१५ ॥
नलोपः सौत्रनिर्देशात्कपेश्चलनवाचकात् ।
व्रीह्यादीनां तृणे क्लीबं पलालमिति कथ्यते ॥ ५१६ ॥
पलाली विबुधैः प्रोक्ता पलाले महति स्त्रियाम् ।
तत्र शाकीपलालीति पा[6]मादिगणसूत्रः ॥ ५१७ ॥
मत्वर्थीये वाच्यलिङ्गं ह्रस्वत्वे स्यात्पलालिनम् ।

१. Pā. VII-i-58.
२. Pā. V-iv-38.
३. This अन्ये seems to be Mādhava.
४. Pā. IV-1-73.
५. Vā. IV-i-97.
६. Pā. V-ii-100.

अट्टालो ना दुर्गभूमिसन्निवेशे जनाश्रये ॥ ५१८ ॥

पाञ्चाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति ।
पाञ्चाली द्रौपदी प्रोक्ता वस्त्रदन्तादिपुत्रिका ॥ ५१९ ॥

पाञ्चालिकापि सा काव्यरीतिभेदेऽपि कथ्यते ।
अत्र बाहुलकादस्ति शालशब्दोऽपि साधितः ॥ ५२० ॥

पुंलिङ्गः स्यादयं मत्स्यप्रभेदे सर्जपादपे ।
शालागृहे तरुस्कन्धे शाखागौरैकदेशयोः ॥ ५२१ ॥

न्यासकारस्तु शलतेश्चलनार्थाःकृते घञि ।
निपातनात्सुराच्छायाशालेति क्लीत्वमभ्यधात् ॥ ५२२ ॥

शल्भ कत्थन इत्याह बोपदेवस्तु धातुवित् ।
अकर्तरि च सूत्रेण घञस्माद्वा विधीयताम् ॥ ५२३ ॥

शाडेरट्टादिषट्त्रिंशत्पठिताच्छ्लाघनार्थकात् ।
स्मरता लडयोरैक्यं मैत्रेयेणायमीरितः ॥ ५२४ ॥

शालाप्रवेशानार्हत्वे शालिको धृष्ट उच्यते ।
एतदन्तस्तत्पुरुषो यस्त्वनञ्कर्मधारयः ॥ ५२५ ॥

असौ विभाषा सेनेति वा नपुंसकतां भजेत् ।
गोशालमपि गोशाला तदुदाहरणं यतः ॥ ५२६ ॥

एवं सेनासुराच्छायास्थलेऽप्यूह्यमितो बुधैः ।
गोशालखरशालाभ्यां जातार्थप्रत्ययस्य लुक् ॥ ५२७ ॥

गोशालः खरशालश्च तत्र जातस्ततः स्मृतः ।
स्थानान्तगोशालखरशालाच्चेति हि सूत्रितम् ॥ ५२८ ॥

ह्रस्वपाठेऽपि सूत्रेऽत्र स्याच्च लिङ्गविशिष्टतः ।

१. Pā. II-iv-25.
२. Kavikalpadruma p. 170.
३. Pā. III-iii-19.
४. Pā. II-iv-19.
५. Pā. II-iv-25.
६. Pā. IV-iii-25.
७. Pā. IV-iii-35.

वत्सशालाभिजित्सूत्रे[1] विकल्पेन लुगीरणात् ॥ ५२९ ॥

वत्सशालाद्वत्सशालो वात्सशाल इति द्विधा ।
स्त्रीनपुंसकयोरत्राप्युन्नेयं लुग्विकल्पनम् ॥ ५३० ॥

यदा ठगायस्थानेभ्यो[2] विहितस्तत आगते ।
आगतः शुल्कशालायाः स्यात्तदा शौल्कशालिकः॥५३१

**पतेरङ्गच्पक्षिणि॥ १-११२ ॥**

पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः ।
बिडाले च भवेत्पुंसि पारदे तु नपुंसकम् ॥ ५३२ ॥

पतेरङ्गच्पक्षिणीति सूत्रकारेण यद्यपि ।
अर्थोऽप्युक्तस्तथाप्यर्थान्तरे बाहुलकादयम् ॥ ५३३ ॥

**तरत्यादिभ्यश्च ॥ १-११३ ॥**

तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोः ।
एवंविधस्तरत्यादिष्वन्येऽप्यूह्या विचक्षणैः ॥ ५३४ ॥

**बिडादिभ्यः कित् ॥ १-११४ ॥**

विडङ्गः क्रिमिसङ्घघ्ने नागराभिज्ञयोस्त्रिषु ।
मृदङ्गः पटहे घोषे कुरङ्गो हरिणे स्मृतः ॥ ५३५ ॥

कुङ्गो बाहुलकादुत्वे कुरोतेर्वा यथाश्रुतात् ।
कुरङ्गः साधितः प्रायः कौ भूमौ रङ्गतीति वा ॥५३६॥

अन्यत्रापि बिडादिभ्यः किदित्युक्त्या विचिन्त्यताम् ।
सारङ्गश्चातके भृङ्गे कुरङ्गेऽपि मतङ्गजे ॥ ५३७ ॥

उक्तोऽयं वर्णभेदेऽपि वाच्यलिङ्गो विचक्षणैः ।
शकन्ध्वादिषु[3] पाठेनाप्येष्वर्थेष्वेष विश्रुतः ॥ ५३८ ॥

**सृवृञोर्वृद्धिश्च ॥ १-११५॥**

सवर्णदीर्घेणान्यत्र साराङ्ग इति तद्धितः ।
वारङ्ग इति खड्गादिमुष्टौ पुंसि प्रकीर्तितः॥ ५३९॥

अत्र बाहुलकादस्ति नारङ्गः पिप्पलीरसे ।

१. Pā IV-111-36.
२. Pā. IV-111-75.
३. Vā. VI-1-93.
४. Pā. VI-1-101.

यमजे प्राणिनि विटे नागरङ्गद्रुमेऽपि च ॥ ५४० ॥

गन्गम्यद्योः ॥ १-११६ ॥ गङ्गा स्त्री द्युसरित्यस्माच्छिवशुभ्रतिकादिगात् ।
अपत्ये गाङ्गगाङ्गेयगाङ्गायनय ईरिताः ॥ ५४१ ॥

कशेरुस्वर्णमुस्तेषु गाङ्गेयमिति कथ्यते ।
भवेदङ्गः पुरोडाशे शाखायामप्यसौ पुमान् ॥ ५४२ ॥

अङ्गं गात्र उपाये च प्रतीके चाप्रधानके ।
अङ्गो देशविशेषे स्यात् अङ्ग संबोधनेऽव्ययम् ॥५४३॥

अङ्गजो रुधिरेऽनङ्गे केशिपुत्रे मदेऽपि च ।
आङ्गविद्यस्त्वङ्गविद्यामधीते वेद वेत्यणि ॥ ५४४ ॥

विद्यान्तादङ्गधर्मत्रिक्षत्रपूर्वान्न ठग्यतः ।
विद्यालक्षणकल्पान्ताच्चेति वार्तिकदर्शितात् ॥ ५४५ ॥

आङ्गको वुञ्यणो बाधादवृद्धादपि बहुति ।

छापूखडिभ्यः कित् ॥ १-११७ ॥ छागो भवेदजे पुंसि पूगस्तु क्रमुके गणे ॥ ५४६ ॥
त्रिषु स्यात्पूरणे पूगतिथोढट्तिथुकोस्सतोः ।
खङ्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके ॥ ५४७ ॥

षिङ्गो बाहुलकादत्रानादरार्थषिटेर्विटे ।
धात्वादेष्षः स इति च सत्वं नोक्तेन हेतुना ॥ ५४८ ॥

भृञः कित् नुट् च ॥ १-११८ ॥ भृङ्गशब्दस्तु पुंलिङ्गो भवेद्धूम्याटषिङ्गयोः ।
मधुव्रते भृङ्गराजे भृङ्गं क्लीबे गुडत्वचि ॥ ५४९ ॥

शृणातेर्ह्रस्वश्च ॥ १-११९ ॥ शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके ।
विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके ॥ ५५० ॥

स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ ।

१. Pā. IV-ii-59.
२. Vā. IV-ii-60.
३. Vā. IV-ii-60.
४. Pā. IV-ii-125.
५. Pā. VI-i-64.

मत्वर्थीय इनौ शृङ्गी विषारामद्रुमादिषु ॥ ५५१ ॥

शृङ्गयुक्ते शृङ्गिणोऽपि ज्योत्स्नादिषु निपातनात् ।

शृङ्गारकस्तथा शृङ्गबृन्दाभ्यामारकन्विधेः ॥ ५५२ ॥

**गण् शकुनौ ॥ १-१२० ॥** शार्ङ्गशब्दः पक्षिभेदे मुनिपुत्रे च कथ्यते ।

शृङ्गशब्दाद्विकाराणि प्राहुश्चापे त्विमं बुधाः ॥ ५५३ ॥

**मुदिग्रोर्गग्गौ ॥१-१२१॥** मुद्गो धान्यविशेषे स्यान्मौद्गो मुद्गादणित्यणि ।

अन्नादौ मुद्गसंसृष्टेर्मौद्गीनं तु भवेत् खञि ॥ ५५४ ॥

मुद्गानां भवने क्षेत्रे गर्गः स्यात्तापसान्तरे ।

गर्गादियञि गार्ग्यः स्यात् गोत्रे बहुषु तस्य लुक् ॥

गर्गाद्यञि स्त्रियां नैवं स्त्रियो गार्ग्य इतीह दिक् ।

श्लाघादाविह भावेन कर्मण्यपि कृते वुञि ॥ ५५६ ॥

श्लाघतेऽसौ गार्गिकयेत्यादि साधु समर्थ्यते ।

यून्यपत्ये गार्ग्यशब्दाद्यञिञोश्चेति फग्भवेत् ॥ ५५७ ॥

गार्ग्यायणस्तथा स्त्रीत्वे युवता नेति नैव फक् ।

प्राग्दीव्यतीयेऽजादौ वा फक्फिञोर्यूनि लुग्विधेः ॥५५८॥

गार्ग्यायणीया गार्गीयाश्चेत्यादिद्वैधमुच्यते ।

यञश्चेति स्त्रियां ङीपि गार्गी प्राचां ष्फतद्धिते ॥५५९॥

गार्ग्यायणी यलोपस्तु नात्रानातीति[नायनेयीति]दर्शनात् ।

गोत्रस्त्रियाः कुत्सने ण चेत्यत्र णठकोर्विधेः ॥ ५६० ॥

गार्गो वा गार्गिको वा स्यादन्यत्राप्येवमेव दिक् ।

१. Vā. V-ii-121.
२. Pā. IV-iv-25.
३. Pā. IV-i-101.
४. Pā. IV-i-91.
५. Pā. IV-i-16.
६. Pā. IV-i-17.
७. Pā. VII-i-2.
८. Pā. IV-i-147.

सेन्नाङ्कलक्षणेष्वञ्यञिञामणिति शासनात् ॥ ५६१ ॥

घोषस्य[1] वार्तिकोक्तेश्च[2] गार्गे एष्वभिधेयवत् ।
गोत्रादङ्कवदित्युक्तेः[3] स्यादयं तत आगते ॥ ५६२ ॥

अण्डन् कृसृभृवृञः ॥ १-१२२ ॥

करण्डः साङ्कवमदाद्युपधानार्थभाजने ।
सरण्डः सरटे धूर्ते विहङ्गे भूषणान्तरे ॥ ५६३ ॥

भरण्डशब्दः पुंस्येषः पोषके परिकीर्त्यते ।
वरण्डोऽप्यन्तरावेद्यां सन्दोहमुखरोगयोः ॥ ५६४ ॥

अत्र बाहुलकादण्डन्प्रत्ययस्तरतेरसौ ।
तरण्डो बडिशे सूत्रबद्धकाष्ठादिके प्लवे ॥ ५६५ ॥

शृदृभसोऽदिः ॥ १-१२३ ॥

ऋतुभेदे वत्सरे च स्त्रीलिङ्गः शरदुच्यते ।
अतः श्राद्धे[4] शरद इत्यृत्वणो बाधके ठञि ॥ ५६६ ॥

श्राद्धं शारदिकं रोगातपयोरत्र वा सति ।
भवेच्छारदिको रोगः शारदो वा तथातपः ॥ ५६७ ॥

अन्यत्र त्वृत्वणा जाताद्यर्थेषु सति शारदः ।
शारदी देवता सास्य कालेभ्यो भववद्विधेः[5] ॥ ५६८ ॥

कार्यं वा दीयते वा यच्छरद्येतच्च शारदम् ।
प्राग्वतीयेषु कालादीत्युक्त्या[6] भववदीरणात् ॥ ५६९ ॥

एवमन्यत्र कालेभ्य ऊह्यन्तां प्रत्यया बुधैः ।
दर्भमुद्गविशेषास्तु संज्ञायां शरदो वुञि[7] ॥ ५७० ॥

उक्ताः शारदकास्तत्र जाँत इत्यर्थदर्शिताः ।
स्युरस्मादव्ययीभावे टचोपशरदादयः ॥ ५७१ ॥

1. Pā. IV-iii-127.
2. Vā. IV-iii-127.
3. Pā. IV-iii-80.
4. Pā. IV-i-12.
5. Pā. IV-iii-13.
6. Pā. IV-ii-34.
7. Pā IV-iii-25.

दरस्त्रियां प्रपाते च भयाद्रितिमिरेषु च ।
कूले च हृदये चाथ दरद्देशेऽपि कथ्यते ॥ ५७२ ॥

[¹भसत्स्त्री भास्वरे योनौ] भसज्जघनगुह्ययोः ।
पृषेर्बाहुलकादस्मिन् पर्षत्परिषदि स्त्रियाम् ॥ ५७३ ॥

²रजः कृषीति मत्त्वर्थे वले पर्षद्वलस्त्रिषु ।
तत्र सूत्रे परिषदः पाठे तु परिषद्वलः ॥ ५७४ ॥

दृणातेः षुक् ह्रस्वश्च ॥ १-१२४ ॥

दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम् ।
त्यत्तद्यदस्त्रयः सर्वादिगणे पठिता अमी ॥ ५७५ ॥

त्यजितनियजिभ्यो डित् ॥ १-१२५ ॥

तत्राद्यौ तु परोक्षार्थौ तृतीयस्तन्निरूपकः ।
आद्यस्य लोके न क्वापि प्रयोगः परिदृश्यते ॥ ५७६ ॥

वेदे त्वेषस्य वाजीति प्रभृतिष्वथ गम्यते ।
स्यश्³छन्दसीति सूत्रस्थच्छन्दोग्रहणलिङ्गतः ॥ ५७७ ॥

लोकेऽप्यस्य प्रयोगोऽस्तीत्येतदभ्युपगम्यते ।
त्यदाद्यत्त्वादिकं कार्यं यथायोग्यं विचिन्त्यताम् ॥५७८॥

यत्तदित्यव्ययत्वे तु हेत्वर्थकमिदं द्वयम् ।
य इत्यनिर्धारितेऽर्थे स इत्यर्थे विनिश्चिते ॥ ५७९ ॥

सर्वत्र चैतावुद्देश्यविधेयैकत्वकल्पकौ ।
स्यातामपि च पर्यायात्तत्तल्लिङ्गानुभाविनौ ॥ ५८० ॥

सर्वभावे स[स्वस्वभावेन] चान्योन्यप्रयोगाकाङ्क्षिणावुभौ ।
न प्रक्रान्तप्रसिद्धानुभूतार्थविषयः श्रुतः ॥ ५८१ ॥

तच्छब्दः क्वापि यच्छब्दोपादानं समपेक्षते ।
यच्छब्द उत्तरे वाक्ये स्थितस्तच्छब्दनिःस्पृहः ॥५८२॥

१. The first pāda is not found in either of mss; the second pāda alone is found in B.

२. Pā. V-ii-112.

३. Pā. VI-i-133.

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दं न विमुञ्चति ।
प्रसिद्धमाह तच्छब्दो यच्छब्दनिकटे स्थितः ॥५८३॥

लिखितं यद्यदित्युक्त्यां तच्छब्दः सकृदीरितः ।
परामृशति सामर्थ्याद्वीप्सां तत्रापि चेद्द्रुता ॥ ५८४ ॥

त्यतस्त्यत्रततस्तत्रयतोयत्रतसिल्त्रपोः ।
तदा यदेति सप्तम्याः कालार्थे तद्यदोर्भवेत् ॥ ५८५ ॥

[1]तदो दा चेति चाद्दार्नी चेत्तदार्नी तदार्थकम् ।
तद्यदोर्वा तर्हि यर्हि कालेऽनैद्यतनेर्हिला ॥ ५८६ ॥

पक्षे यदातदा स्यातां त्यदादित्रितयात्पुनः ।
[3]प्रकारवचने थालि स्युस्त्यथा च तथा यथा ॥ ५८७ ॥

यथा कथा च यत्कार्यं दीयतेऽनादरेण यत् ।
[4]यथा कथा चेति सङ्घादव्ययानां णशासनात् ॥५८८॥

इत्येवं प्राग्दिशीयानां प्रकार इह दर्शितः ।
[5]तद्धितश्चासर्वसूत्रादेतेष्वव्ययता स्फुटा ॥ ५८९ ॥

तावान् यावानिति स्यातां तद्यदोरुभयोः क्रमात् ।
[6]परिमाणे वतुब्यत्तदेतेभ्यो विहितो यतः ॥ ५९० ॥

साकल्यादर्थकं यावत् यावच्छादिष्वपि द्वयम् ।
यावती प्रकृतौ वेदिर्द्विस्तावा द्विगुणा ततः ॥ ५९.१ ॥

प्रकीर्त्यतेऽश्वमेधादौ त्रिस्तावात्त्रिगुणा यदि ।
णमुल्यावतिविन्देश्च जीवेरपि विधीयते ॥ ५९२ ॥

यावद्वेदं तथा यावज्जीवमित्यभिधीयते ।
द्वयसज्मात्रचौ स्वार्थे वत्वन्ताद्विहितौ यदि ॥ ५९३ ॥

१. Pā. V-iii-19.
२. Pā. V-iii-21.
३. Pā. V-iii-33.
४. Pā. V-i-98.
५. Pā. I-i-38.
६. Pā. V-ii-39.

स्यात्तावद्वयसं तावन्मात्रमित्यादिरत्र दिक् ।
डकि[डटः] थुगागमे तावतिथ इत्यादि पूरणे ॥ ५९४ ॥

आर्हीयार्थे वतोरिड्वा विहितः परतः कनि ।
स्युस्तावतिकतावत्कादयस्तेन प्रयोजिताः ॥ ५९५ ॥

निर्धारणे द्विविषये ततरो यतरोऽपि च ।
ततमो यतमो जातिप्रश्नेऽस्मिन् बहुगोचरे ॥ ५९६ ॥

**एतेस्तुट् च ॥ १-१२४ ॥** एतदित्यपि सर्वादिः समीपतरवर्तिनि ।
अत्वसत्वादिकं सर्वं त्यदादित्वेन पूर्ववत् ॥ ५९७ ॥

एतदोऽनित्यन्विधानादतोऽत्रेति तसिल्त्रलोः ।
एतर्हिकाल एतस्मिन्नित्यनद्यतनेर्हिला ॥ ५९८ ॥

इत्थमित्येतदो वाक्यात्प्रकारवच थमौ [वचने थमुः] ।
प्राग्दिशीया इमे प्राग्वद्वतुप्रत्ययसंस्तुतिः ॥ ५९९ ॥

आत्वं तु दृग्दृशवतुष्विति तत्र विचिन्त्यताम् ॥

**सर्तेरटः ॥ १-१२५ ॥** सरट् स्याद्गन्धवाहेऽपि सरघायां बलाहके ॥ ६०० ॥

**लङ्घेर्नलोपश्च ॥ १-१२६ ॥** अप्सरस्सु च वायौ च लघड्धीरैर्निगद्यते ॥

**पारयतेरजः ॥ १-१२७ ॥** पारक् छले सुवर्णे च रक्तवर्णे च सर्पिषि ॥ ६०१ ॥

**प्रथेः कित्संप्रसारणं च ॥ १-१२८ ॥** पृथग्विनार्थः पाठेन स्वरादिष्वव्ययं स्मृतम् ॥

**भियः षुग्घ्रस्वश्च ॥ १-१२९ ॥** भिषग्वैद्ये शैषिकेऽणि भेषजं स्मृतमौषधम् ॥ ६०२ ॥

एत्वं पृषोदरादित्वाद्धातोरस्यावगम्यताम् ।
अनन्तावसथेति ञ्ये स्वार्थे भैषज्यमप्यतः ॥ ६०३ ॥

भभेदे स्त्री शतभिषक् तत्र जाते तु शैषिके ।
अणि वा तस्य डिद्भावे वैत्सशालेति वा लुकि ॥ ६०४ ॥

१. Pā. V-i-23.
२. Pā. V-iii-5. For a different reading of this Sūtra see the Kāśikā.
३. Pā. V-iv-23.
४. Pā. IV-iii-36.

स्याच्छातभिषजश्शातभिषश्शतभिषक् त्रिषु ॥

युष्यसिभ्यां मदिक् ॥ १-१३० ॥

प्रकीर्तितौ युष्मदस्मदित्येतौ सर्वनामसु ॥ ६०५ ॥
सौत्रो युषिरसौ[रसिः] दैवादिको भौवादिकोऽपि वा ।
संबोध्ये प्रथमः स्वात्मनिर्देशेऽन्यः प्रयुज्यते ॥ ६०६ ॥
स्वाहादिकार्यजातं तु सौपत्वान्नात्र चिन्त्यते ।
युष्मदीयास्मदीयौ छे शैषिके द्विबहुत्वयोः ॥ ६०७ ॥
एकत्वे तु त्वदीयश्च मदीयश्च प्रकीर्तितौ ।
यौष्माकीणो द्विबह्वोः खञ्यास्माकीनश्च कथ्यते ॥
अणप्रत्यये तु यौष्माकास्माकौ तत्र प्रदर्शितौ ।
खञ्येकत्वे तावकीनमामकीनौ क्रमादिह ॥ ६०९ ॥
अणन्तत्वे तु निर्दिष्टौ तत्र तावकमामकौ ।
स्त्रीत्वे तु मामिका छन्दस्येव ङीब्नियमश्रुतेः ॥ ६१० ॥
इत्थं त्वत्रोपसंख्यानात्तावकीति तु ङीप् भवेत् ।
अद्व्यादिभ्य इति प्राग्दिशीये तत्पर्युदासतः ॥ ६११ ॥
अपादाने चेति कनौ[तसौ] त्वत्तो मत्तस्तसिल् तु न ।
त्वत्का मत्का इति तु कन् स[3] एषां ग्रामणीरिति ॥ ६१२ ॥

अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ॥ १-१३१ ॥

चतुर्दश धातवः ॥
अर्मश्चाक्षुषरोगे स्यात् स्तोमः सामकुले गणे ॥ ६१३ ॥
सोमः कुबेरे पितृदेवतायां वसुप्रभेदे च निशाकरे च ।
दिव्यौषधिश्यामलताशरीरकर्पूरनीरानलवानरेषु ॥ ६१४ ॥
सोमोऽस्य देवतेत्यर्थे सौम्यं सोमाट्ट्यणि त्रिषु ।
पत्यन्तादिति वक्तव्ये पत्युत्तरपदादिति ॥ ६१५ ॥

१. Vā. V-iv-44.
२. Pā. V-iv-45.
३. Pā. V-ii-78.
४. Pā. IV-ii-30.
५. Pā. IV-i-85.

दित्यैदित्यादिसूत्रे यदुक्तं तदधिकाप्तये ।
तेन प्राग्दीव्यतीयेषु सौम्यः सर्वत्र दृश्यते ॥ ६१६ ॥

सौम्यो बुधे मनोज्ञे स्यादब्दे विप्रे स्त्रियां त्वसौ ।
इल्वलासु भवेन्नीचे संबोध्येऽपि च वाच्यवत् ॥६१७॥

स बहुच्कस्य मा ण्योभूत्पत्यन्तस्येति सूत्रकृत् ।
तत्र पत्युत्तरपदादित्यवोचदिति स्थितिः ॥ ६१८ ॥

अतोऽगित्यन्तरेणैव सौम्यः साध्यो बुधादिषु ।
बहुव्रीहौ सोमजम्भासमासान्तेऽनिचि स्मृतः ॥ ६१९ ॥

हविःप्रक्षेपयोर्वक्ता होमः सर्मस्तु सर्पणे ।
धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ ॥ ६२० ॥

उपमायामहिंसायां चापे चोपनिषद्यपि ।
धर्म्योऽस्मादनपेते स्यात्प्राप्ये चानेन वाच्यवत् ॥६२१॥

धार्मिकस्तु चरत्येनं भवेदाधर्मिकस्तु तम् ।
बहुव्रीहिसमासे तु धर्मादनिचि केवलात् ॥ ६२२ ॥

मनुष्यधर्मा कल्याणधर्मेत्यादिः प्रसिध्यति ।
सुधर्मा देवगोष्ठ्यां स्त्री टाबन्तोऽप्येष दृश्यते ॥ ६२३ ॥

धार्मविद्यो धर्मविद्यामधीते वेद वेत्त्यैणि ।
क्षेमं स्यान्मङ्गले लब्धरक्षणे चोरकेऽपि च ॥ ६२४ ॥

क्षेमा धनहरीगौर्योः क्षेमः ख्यातः क्षमान्विते ।
अस्मिन्नुपपदे क्षेमप्रियमद्रेऽण्च खच्यणि ॥ ६२५ ॥

क्षेमंकरः क्षेमकार इति द्वेधा कृञो भवेत् ।
क्षोम एव क्षौम इति प्रज्ञाद्यणि भवेदयम् ॥ ६२६ ॥

१. Pā. IV-i-85.
२. Pā. V-iv-124.
३. Pā. IV-ii-59.
४. Pā. III-ii-44.

वल्कलाद्दुकूलेषु पुंसि क्लीबे च विश्रुतः ।
भामः क्रोधे रवौ दीप्तौ भामा योषित्यपि स्त्रियाम् ॥६२७॥

यामस्तु पुंसि प्रहरे संयमेऽपि च कथ्यते ।
वामं धने पुंसि हरे कामदेवे पयोधरे ॥ ६२८ ॥

वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ ।
वामी सृगालीबडबारासभीकरभीषु च ॥ ६२९ ॥

वामरथ्यो वामरथात्[१]कुर्वादिण्यविधानतः ।
अस्य कण्वादिवद्भावः स्वरवर्[२]जं यतः स्मृतः ॥ ६३० ॥

[३]कण्वादिभ्यो गोत्र इत्यण् शेषे वामरथास्ततः ।
तथा बहुत्वे ण्यलुका प्रोक्ता वामरथा इति ॥ ६३१ ॥

[४]सङ्घाङ्कलक्षणेष्वेवमणि वामरथो भवेत् ।
वामदेवो मुनेर्भेदे तेन दृष्टे तु सामनि ॥ ६३२ ॥

वामदेव्यं [५]वामदेवाड्ड्यड्ड्यावित्यनयोर्विधेः ।
पद्मः स्यात्पन्नगे व्यूहे निधौ संख्यान्तरेऽम्बुजे ॥६३३॥

पद्मकं बिन्दुजालेऽपि पद्मा भार्गीश्रियोरपि ।
अन्तस्थादिः पुमान् यक्ष्मः क्षयरोगस्य वाचकः ॥६३४॥

धातोर्हि यक्षपूजायामित्यतोऽयमिति स्थितिः ।
चुतृतीयादिकाद्यक्षहननार्थपदादिकात् ॥ ६३५ ॥

साधयन्तो लोकवेदविरोधादिह नादृताः ।
कृते मनिन्प्रत्यये तु नान्तोऽप्येष विभाव्यते ॥ ६३६ ॥

राजयक्ष्मेव रोगाणामिति माघोक्तिदर्शनात् ।
पठित्वा दशपाद्यां तु पवर्गीयादमादिकम् ॥ ६३७ ॥

१. Pā. IV-i-151.　　३. Pā. IV-iii-127.
२. Pā. IV-ii-111.　　४. Pā. IV-ii-9.

उदाहार्यक्षिपक्ष्मेति गतार्थं मनिनैव तत् ।
नेमर्थे[नेमोऽर्धे] च वधौ गर्ते प्राकारे कैतवेऽपि च॥६३८॥

गणपाठेऽपि सत्यस्य जसि वा सर्वनामता ।
ज्ञेयाः सुधीभिः [1]प्रथमचरमेत्यादिसूत्रतः ॥ ६३९ ॥

**जहातेः सन्वदालोपश्च ॥ १-१३२ ॥**

जिह्मस्तु कुटिले मन्दे क्लीबे तगरपादपे ।
जिह्ममश्नाति जिह्माशी शु[2]भ्रादिगणदर्शितः ॥ ६४० ॥

जैह्माशिनेयोड्ढक्यस्मा[3]द्दाण्डिनायनसूत्रतः ।
निपातनाट्टिलोपोऽत्र नेति ज्ञेयो विचक्षणैः ॥ ६४१ ॥

**अवतेष्टिलोपश्च ॥ १-१३३ ॥**

उपस्थिते मन्यवतेष्टिलोपश्चेति शासनात् ।
ओमित्यदोऽवतीत्यर्थे प्रत्ययस्य टिलोपतः ॥ ६४२ ॥

[4]ज्वरत्वरेति प्रकृतेरूठो दीर्घे ततो गुणे ।
रक्षकं सिद्धरूपत्वात्सत्वमर्थोऽस्य खल्वभूत् ॥ ६४३ ॥

अतोऽव्ययत्वं पाठेन स्वरादिषु न चादिषु ।
रक्षकं च परं ब्रह्म योगिध्येयं प्रचक्षते ॥ ६४४ ॥

स्वजापि[स्वज्ञाप्य]रक्षणात्स्वाख्या स्याद्वेयं शब्दशब्दवत् ।
उमया सहितः सोम इति निर्वर्त्य केचन ॥ ६४५ ॥

[5]पृषोदरादिष्वन्तादिलोपेनैवमिदं जगुः ।
अकारोकारयोस्सन्धौ मकारेऽपि शिरःस्थिते ॥ ६४६ ॥

ब्रह्मविष्णुमहेशाख्यां वदन्त्येतदिहापरे ।
अमी शब्दास्त्रयो यस्य वाचकास्त्र्यम्बको हि सः ॥६४७॥

अम्बेः शब्दार्थकादम्बशब्दः शब्दार्थको[6] यतः ।
एवं यद्यप्यनेके स्युरर्थाः प्रणवगोचराः ॥ ६४८ ॥

१. Pā. I-1-33.
२. Pā. IV-1-123.
३. Pā. VI-iv-174.
४. Pā. VI-iv-20.
५. Pā. VI-iii-109.
६. गोचरः is another reading found in the original.

तथाप्युपनिषत्सर्वा त्र्यक्षरीमवलम्बते ।
प्रश्नेऽप्यङ्गीकृतौ रोपेऽप्योम् वेदाद्यन्तयोरपि ॥६४९॥

ग्रसतेरा च ॥ १-१३४ ॥

ग्रामः स्वरे संवसथे बृन्दे शब्दादिपूर्वकः ।
संपूर्वः संयुगे प्रोक्तश्चुरादिष्वेव दर्शितः ।
ग्रामता तु स्त्रियां ग्रामबृन्दे विद्वद्भिरुच्यते ॥ ६५० ॥

शेषाधिकारविहिते ये खञिढकञिक्रमाद्बुधैः ।
ग्राम्यश्च ग्रामीणो ग्रामेयक इत्यमी त्रयः कथिताः॥६५१॥

ग्राम्यधर्मस्तु विबुधैः स्मृतो निधुवनार्थकः ।
अव्ययीभावतो ग्रामाट्ठञि पर्यनुपूर्वतः ॥ ६५२ ॥

स्यात्पारिग्रामिकश्चानुग्रामि*श्च भवार्थके ।
णत्वे स्याद्ग्रामणीरग्रीग्रामाभ्यां नयतेरिति ॥ ६५३ ॥

नापिते पुंस्ययं श्रेष्ठे ग्रामाधीशेऽपि च त्रिषु ।
दाक्षिग्रामीयमिति तु छे कन्थापलदादिना ॥ ६५४ ॥

अपवादष्ठञ्ञिठादेर्वृद्धाच्छो ह्यत्र संभवेत् ॥

अविसिविसिशुषिभ्यः कित् ॥ १-१३५ ॥

ऊमं खे नगरे क्लीबं स्यूमस्तु किरणे पुमान् ॥ ६५५ ॥
सिमः सर्वादिपठितस्त्रिलिङ्गः सर्ववाचकः ।
शुष्मस्तेजोऽर्कयोरग्नौ शुष्मं क्षीरे बलेऽपि च ॥ ६५६ ॥

इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥१-१३६॥

ईषीति पाठान्तरम् ॥

इष्मः कामे वसन्ते स्यादीष्मो वा पाठभेदतः ।
ह्रस्वादेरपि दीर्घादेर्धातोर्द्वेधापि संभवात् ॥ ६५७ ॥

युध्मो योद्धरि बाणे च संयुगे कार्मुकेऽपि च ।
इध्मः पुंसि प्रकथितः काष्ठे काले च सूरिभिः ॥६५८॥

१. Vā. III-ii-61. २. Pā. IV-ii-142.

[1][केचित्पुंसि वदन्त्येनं] काले काष्ठे तु न द्वयोः ।
दस्मस्तु यजमाने स्याच्चोरे हीने हुताशने ॥ ६५९ ॥

श्यामः स्यान्मेचके वृद्धदारके हरिते घने ।
वटद्रुमे प्रयागस्य श्यामा स्त्री वागुरा स्मृता ॥ ६६० ॥

अप्रसूताङ्गनायां च तथा सोमलतौषधौ ।
त्रिवृताशारिबागुन्द्रानिशाकृष्णाप्रियङ्गुषु ॥ ६६१ ॥

नील्यां चाथ पिके पुंसि मरीचे लवणान्तरे ।
उक्तो दमनके गन्धे त्वचि श्यामोऽभिधेयवत् ॥ ६६२ ॥

अग्निकेतौ देशभेदे धूमः पुंसि निगद्यते ।
धूम्या तु कथिता धीरैः स्त्रियां धूमकदम्बके ॥ ६६३ ॥

धूम्याटस्तु कलिङ्गेऽथ धूमलः कृष्णलोहिते ।
सूमो रवौ चन्द्रमसि विहायसि च कथ्यते ॥ ६६४ ॥

ईर्मं तु न द्वयोरुक्तं तृणवाचि विचक्षणैः ।
दक्षिणेर्मामृगे लुब्धयोगतो दक्षिणव्रणे ॥ ६६५ ॥

जन्मं जनेर्मे जनुषि उभे बाहुलकादमू ।
जन्मशब्दो मनिन्नन्तः प्रचुरोऽयमपि क्वचित् ॥ ६६६ ॥

व्रीह्यादित्वादिनावस्मादपि जन्मी शरीरिणि ॥

**युजिरुचितिजां कुश्च ॥ १-१३७ ॥**

द्वयेनौजेन युग्मं स्याद्रुक्मं काञ्चनलोहयोः ॥ ६६७ ॥
तिग्मं तु वाच्यवत्तीक्ष्णं पुंसि वह्नौ च भास्करे ॥

**हन्तेर्हि च ॥ १-१३८ ॥**

हिमं स्यात्तुहिने क्लीबं चन्दने शीतले त्रिषु ॥ ६६८ ॥

हिमे महति विद्वद्भिर्हिमानी कथिता स्त्रियाम् ।
हिमात्तु यपि मत्वर्थे हिम्यो हिमवति स्मृतः ॥ ६६९ ॥

1. The pāda within brackets is not found in the ms.

हिमं न सहते यस्तु स हिमेलुः प्रकीर्तितः ।
हिमे पादस्य पद्भावे [1]हिमकाषीतिवद्धिमम् ॥ ६७० ॥

**भियः षुग्वा ॥१-१३९॥** भीमोऽम्लवेतसे शंभौ घोरे चापि वृकोदरे ।
भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाकरे ॥ ६७१ ॥

**घर्मः ॥ १-१४० ॥** घर्मः स्यादातपे ग्रीष्मेऽप्यूष्मस्वेदाम्भसोरपि ॥
**ग्रीष्मः ॥ १-१४१ ॥** ग्रीष्मः स्यादूष्मणि पुमान्वसन्तानन्तरेऽप्यृतौ ॥ ६७२ ॥

अर्थे प्राग्दीव्यतीयेऽस्माद्ग्रीष्मेऽछन्दस्यञि त्रिषु ।
ऋत्वण्वुञोस्सतोरुक्ते ग्रैष्मश्च ग्रैष्मकस्तथा ॥
स्याद्ग्रैष्मकमृणं ग्रीष्मे देयं वुञ्प्रत्यये सति ॥ ६७३ ॥

**प्रथेः षिवन् संप्रसारणं च ॥ १-१४२ ॥** षवन्नित्येके ॥
पिवन्षवन्पाठभेदात्पृथिवी पृथवी क्षितौ ।
पृथिव्याः पार्थिवो ञाञोरर्थे प्राग्दीव्यतीयके ॥ ६७४ ॥

स्त्रियां ञे पार्थिवा: स्यादञ्प्रत्यये पार्थिवीति ङीप् ।
अपत्येऽर्थे शार्ङ्गरवाद्यञो ङीनिति जातिङीन् ॥ ६७५ ॥

अञ्प्रत्यये पार्थिव इह सूत्रात्सर्वभूमिपृथिवीति ।
संयोगोत्पातात्मनि भवति पृथिव्या निमित्तभूतेऽर्थे॥ ६७६॥

पृथिव्या ईश्वरेऽप्येवं पृथिव्यां विदितेऽपि च ।
दिवसश्च पृथिव्यामित्युक्तेरत्र प्रकीर्तिते ॥ ६७७ ॥

दिवस्पृथिव्यौ तु द्यावापृथिव्यावपि रोदसोः ।
दिवसश्चेत्यकारेण सकारपरिरक्षणात् ॥
दिवस्पृथिव्यावित्यत्र रुप्रवृत्तिर्न कल्पते ॥ ६७८ ॥

१. Pā. VI-iii-54.
२. Pā. IV-i-73.
३. Pā. V-i-41.
४. Pā. VI-iii-30.

मिलिते तु देवतैका यस्य द्यावापृथिव्यौ तत् ।
स्याद्द्यावापृथिवीयं छयतोर्द्यावापृथिव्यं च ॥ ६७९ ॥

अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥
॥ १-१४३ ॥

केचित् प्युषीत्युकारवन्तं[१]द्वितीयधातुं पठन्ति ॥
हयपुंभेदयोरश्वः स्त्र्यश्वाजादिषु टाब्विधेः ।
भवेदाश्वायनो गोत्रापत्येऽर्थे फञ्विधानतः ॥ ६८० ॥

वृन्दे त्वश्वीयमाश्वं च च्छाणोः स्यातां क्रमादिह ।
असंख्यापरिमाणाश्वादेर्द्वयचो यद्विधानतः ॥ ६८१ ॥

संयोगोत्पातयोः स्याट्ठक्याश्विकोऽश्वनिमित्तयोः ।
अश्विकोऽश्वेन चरति पर्पादिभ्यश्च ठन्विधेः ॥ ६८२ ॥

आश्वीन इति खञ्यश्वस्यैकाहगमवर्त्मनि ।
तनुत्वेऽश्वतरो वैत्सोक्षाश्वेति ष्टरचि स्मृतः ॥ ६८३ ॥

कृशाश्वो नटसूत्रस्य प्रवक्तरि महामुनौ ।
कृशाश्विन इह प्रोक्ते तत्प्रोक्ताध्यायि तद्विदः ॥ ६८४ ॥

काशाश्वीयो वुञ्छणादिछणि स्याच्चातुरर्थिके ।
स्थाधातोरश्वपूर्वात्तु सुपि स्थ इति के सति ॥ ६८५ ॥

तत्त्वे पृषोदरादित्वात्सकारस्य च साधिते ।
अश्वत्थो गर्दभाण्डे स्यात् पिप्पले पूर्णिमातिथौ ॥६८६॥

लुबणोऽश्वत्थयुक्तायां पौर्णमास्यामिहाश्रितः ।
निपातनादाग्रहायण्यश्वत्थाट्ठगिति स्मृतौ ॥ ६८७ ॥

अतः सास्मिन्पौर्णमासीत्यर्थे त्वाश्वत्थिकः स्मृतः ।
ऋणन्तु देयमश्वत्थे भवेदश्वत्थकं वुनि ॥ ६८८ ॥

१. Pā. IV-i-4.
२. Pā. IV iv-10.
३. Pā. V-iii-91.
४. Pā. III-ii-4.
५. Pā IV-ii-22.
६. Pā. IV-ii-21.

अश्वत्थामा द्रोणसुते तत्त्वं प्राग्वदिहोच्यते ।
प्राग्दीव्यतीयेष्वर्थेषु स्थाम्नोऽकारविधानतः ॥ ६८९ ॥

अश्वत्थामो भवार्थे स्यादश्वत्थामा लुगीरणात् ।
अश्विन्यामश्वयुक् तस्यां जातेण्वाडित्तथैव लुक् ॥६९०॥

भवेयुरत्राश्वयुजोऽप्याश्वयश्चाश्वयुक्तथा ।
पौर्णमास्यश्वयुग्युक्ता बुधैराश्वयुजी स्मृता ॥ ६९१ ॥

विभाषा फाल्गुनीत्यादिसौत्रनिर्देशदर्शनात् ।
नक्षत्राणां पौर्णमास्यामविशेषेऽपि नैव लुक् ॥ ६९२ ॥

तत्रोक्तास्त्वाश्वयुजका माषाद्या वुञ्विधानतः ।
अश्वस्य रूपयोगेन संज्ञामप्यश्विनीं विदुः ॥ ६९३ ॥

स्वर्वैद्यौ तदपत्यत्वादाश्विनेयौ ढकि स्मृतौ ।
नैक्षत्रेभ्यो बहुलमित्युक्तं बहुलशब्दनात् ॥ ६९४ ॥

अन्यार्थादश्विनीशब्दात्स्याज्जातप्रत्ययस्य लुक् ।
लुकि तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुग्विधेः ॥ ६९५ ॥

अश्विनौ कथितौ दस्रावत्र ह्रस्वादिता स्फुटा ।
द्वन्द्वेऽश्ववडवावश्ववडवं च द्विधा····[स्मृतम्] ॥६९६॥

अतन्त्रं हि द्विवचनमित्यश्ववडवानपि ।
ऋतौ सूर्ये च पुष्वः स्यादसौ जलकणेष्वपि ॥ ६९७ ॥

वाहार्थकात्पृषेरन्यः प्राह········मतो नले ।
लट्वा करञ्जभेदे स्यात्फले वध्ये खगान्तरे ॥ ६९८ ॥

1. Vā. IV-i-85.
2. Pā. IV-ii-23.
3. Pā. IV-iii-37.
4. Pā. I-ii-49.

कण्वं पापे मुनौ पुंसि काण्व्यस्तु यञि गार्ग्यवत्।
केण्वादिभ्यो गोत्र इति यञन्तादणि शैषिके ॥ ६९९ ॥

काण्वः काण्व्यस्य शिष्यादावित्वं चेद्बहुलोक्तितः।
कण्वशब्दे किण्वमपि भवेद्बीजाघशीधुषु ॥ ७०० ॥

अतः स्त्रियां भवेत् खट्वाशब्दः पर्यङ्कवाचकः।
खट्वारूढो जाल्म इति क्षेपे तत्पुरुषः स्मृतः ॥ ७०१ ॥

विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम्।
न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु ॥ ७०२ ॥

सर्वादिगणपाठेन स्यादयं तसिलादिभाक्।
हितं विश्वं जनेभ्यो यैस्तत्रात्मन्विश्वसूत्रतः ॥ ७०३ ॥

खः स्याद्विश्वजनाद्विश्वजनीनं कर्मधारयात्।
अकर्मधारयाद्विश्वजनीयं छे निगद्यते ॥ ७०४ ॥

खञि प्रतिजनादित्वात्साधुर्विश्वजनेषु यः।
तत्र वैश्वजनीनः स्याद्विष्णौ विश्वंभरः पुमान् ॥ ७०५ ॥

विश्वंभरा तु भूमौ स्त्री संज्ञायां भृतृवृजिविधेः।
विश्वावसुस्तु गन्धर्वे दीर्घाद्विश्वस्य वस्विति ॥ ७०६ ॥

विश्वाराडिति राड्रूपे दीर्घोऽस्य परतो भवेत्।
विश्वराजौ विश्वराज इत्याद्यन्यत्र न ह्यसौ ॥ ७०७ ॥

विश्वानरस्त्विह नरे संज्ञायामिति दीर्घतः।
वैश्वानरो बिदादित्वादन्यस्माज्जातवेदसि ॥ ७०८ ॥

१. Pā. IV-ii-111.
२. Pā. V-i-9.
३. Pā. IV-iv-99.
४. Pā. III-ii-46.
५. Pā. VI-iii-128.
६. Pā. VI-iii-129.
७. Pā. IV-i-104.

विश्वामित्र ऋषौ मित्रे च [१]ऋषाविति दीर्घता ।
ऋष्यैन्धकेत्यपत्येऽस्माद्वैश्वामित्रो भवेदणि ॥ ७०९ ॥

इणशीभ्यां वन् ॥ १-१४४ ॥

एव इत्येष शब्दस्तु गन्तरि स्यात्त्रिलिङ्गकः ।
एवेति त्वव्ययं चादिपाठाद्ध्रस्त्ववधारणे ॥ ७१० ॥

भवेदनवक्लृप्तौ च यदाहुः केव भोक्ष्यसे ।
पररूपमिहैवे [३]चानियोग इति शासनात् ॥ ७११ ॥

पदात्परमपादादौ स्थितयोर्युष्मदस्मदोः ।
त्वामेव मामेवेत्यादौ वांनावादेरसंभवः ॥ ७१२ ॥

[४]न च वाहाहैव युक्त इति शास्त्रस्य दर्शनात् ।
शेवं पुंसां लाञ्छने च सुखे च क्वचिदिष्यते ॥७१३॥

सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ॥ १-१४५ ॥

अष्टौ शब्दाः । अतन्त्रे अकर्तरि निपात्यन्ते । लिष्वेत्येके । अन्त्य इष्व ईष्वो वा ॥

त्रिषु सर्वं भवेत्कृत्स्ने हितार्थे णछयोगतः ।
भवेत्सार्वं च सर्वीयं प्राग्दिशीयतसिल्त्रलोः ॥ ७१४ ॥

स्यात्सर्वतश्च सर्वत्र पञ्चमीसप्तमीस्थले ।
सर्वैकान्येति सप्तम्याः काले दा यदि सर्वदा ॥ ७१५ ॥

विकल्पेन सभावस्य सदेत्यपि विदुर्बुधाः ।
वहन् सर्वधुरं सर्वधुरीणः खे सति स्मृतः ॥ ७१६ ॥

हिते सर्वजनाट्ठञ्खत्यतष्ठञि च खे क्रमात् ।
स्यात्सार्वजनिकं सर्वजनीनमिति च द्वयम् ॥ ७१७ ॥

१. Pā. VI-iii-130.
२. Pā. IV-i-114.
३. Vā. VI-i-94.
४. Pā. VIII-i-24.
५. Pā. V-iii-15.
६. Vā. VI-iv-169.

छोऽकर्मधारयात्सर्वजनाद्विश्वजनाद्यथा ।
साधौ सार्वजनीनः खञ्वशाद्वैश्वजनीनवत् ॥ ७१८ ॥

अणि निमित्ते संयोगोत्पातरूपे तथेश्वरे ।
सार्वभौमः सर्वभूमौ विदितेऽपि च कथ्यते ॥ ७१९ ॥

सर्वलोकेति शब्देऽस्मिन् ठञि स्यात्सार्वलौकिकः ।
वृद्धिः पदद्वयेऽत्रानुशतिकादिषु पाठतः ॥ ७२० ॥

यस्तु सर्वश्चर्मणैव कृतस्तत्र ख खञ्वशात् ।
कथ्यते सर्वचर्मीणं सार्वचर्मीण इत्यपि ॥ ७२१ ॥

प्राप्नोतिवध्यङ्गक्रा[व्याप्नोति पथ्यङ्गकर्म]पत्रपात्राणि सर्वतः ।
पराणि यदि खे सर्वपथीनाद्याः स्मृताः क्रमात् ॥ ७२२ ॥

सर्वान्नीनो भक्षयति सर्वान्नानीति कथ्यते ।
संज्ञायां भ्रितिखच्यत्र क्षितौ....[सर्व]सहोच्यते ॥७२३॥

पूःसर्वयोर्दारिसहोरित्यन्यत्राव्ययं त्रिषु ।
सर्वंकषः सर्वकूलेत्यादिना खचि निश्चितः ॥ ७२४ ॥

अन्तात्यन्तेति डविधेः सर्वगः परिकीर्तितः ।
सर्वत्रगश्च सर्वत्रपन्नयोरिति वार्तिकात् ॥ ७२५ ॥

सर्ववेदः सर्ववेदानधीते वेद वा यदि ।
प्रत्ययस्यात्र लुक् सर्वा....[दिः सादेर्लुक] ईरणात् ॥

चतुर्वर्णादिपाठेन स्वार्थे ष्यञनुशासनात् ।
स एव सार्ववेद्योऽपि निष्टृष्वस्तु खुरे पुमान् ॥ ७२७ ॥

१. Pā. VII-iii-20.
२. Pā. V-ii.7.
३. Pā. III-ii-46.
४. Pā. III-ii-41.
५. Pā. III-ii-42.
६. Pā. III-ii-48.
७. Vā. III-ii-48.

रिष्वो हिंस्रे कश्चिदिहर्दुपधादेनमभ्यधात् ।
पङ्गौ च नर्तके चैव लष्वो लिष्वोऽप्यसौ भवेत् ॥
पाठभेदादिहैत्वं च निपातेनैव लभ्यते ॥ ७२८ ॥

क्लीबे शिवं भद्रमुखोदकेषु द्रव्ये त्रिषु स्याद्गिरिशे तु पुंसि ।
शिवा भवेदामलकी भवानी हरीतकी सक्तुफला सृगालः ॥

शैवः शिवाद्यण्यपत्ये शेषेऽणि तु तदन्विते ।
पह्वो रथे च भूलोके प्रह्वस्तु विनयान्विते ॥ ७३० ॥

आचार्ये त्विष्व ईष्वो वा व्याख्याभेदान्निगद्यते ।
यतो गुणे कृते सिद्धं सामान्यं ह्रस्वदीर्घयोः ॥ ७३१ ॥

अत्र बाहुलकाद्ध्रस्वशब्दःस्यादल्पखर्वयोः ।
उक्तो ह्रसिष्ठो ह्रसिमा ह्रसीयानिष्ठनादिषु ॥ ७३२ ॥

[१]स्थूलदूरेति सूत्रेण यणादिपरलोपतः ॥

**शेवायह्वाजिह्वाग्रीवाप्वामीवाः ॥ १-१४६ ॥**

मीवा अमीवा इत्युभयथा व्याख्यानम् ॥
व्याख्यातः शेवशब्दोऽत्र देश[स्वर]भेदाय शिष्यते ॥

यानस्य साधने यह्वे महत्यपि मतौ स्त्रियाम् ।
जिह्वा तु रसनायां स्यात् द्विजिह्वः सूचकेऽप्यसौ ॥७३४॥

गोत्रान्तरत्वाज्जिह्वाछनिमित्तवृद्धसंज्ञायाः ।
प्रतिषिद्धा सा जैह्वाकाता इति तेन शैषिकाणि स्यात् ॥

जिह्वामूले भवं जिह्वामूलीयं छे निगद्यते ।
ग्रीवागलसिरासु स्यात् गलेऽपि परिकीर्तिता ॥७३६॥

कुलकुक्षी····सु····[कुक्षीति सूत्रेण कृ]ते ढकञि शैषिके ।
ग्रैवेयकं बुधैः कण्ठभूषायामभिधीयते ॥ ७३७ ॥

१. Pā. III-i-110.
२. Pā. IV-i-112.
३. Pā. VI-iv-156.
४. Pā. IV-ii-96.

ग्रैवं ग्रैवेयमिति च भवार्थे विदुरण्ठञोः ।
आप्वास्तु वायौ मीवा स्यादुदरक्रिमिवातयोः ॥७३८॥

व्याख्याभेदाद‌मीवोऽपि रोगवाच्येष दृश्यते ।
केशादिसूत्रे[शेवादिसूत्रे] स्त्रीलिङ्गनिर्देशोऽत्राविवक्षितः ॥
अन्यथापि प्रयोगाणामाप्वादिष्ववलोकनात् ॥

कॄगॄशॄदृभ्यो वः ॥ ॥ १-१४७ ॥

कर्वः कामे मूषके च गर्वो वा स्यादकृतौ ॥ ७४० ॥
शर्वः शिवे स्यात्पुंयोगे स्त्रियां ङीषानुगागमौ ।
शर्वाणी तेन पार्वत्यां दर्वो रात्रिचरे पुमान् ॥ ७४१ ॥

कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥ ॥ १-१४८ ॥

युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि ।
संप्रसारणभागेष भसंज्ञायामतद्धिते ॥ ७४२ ॥
युवतिस्तु तरुण्यां स्त्री यौतेश्शतरि ङीपि तु ।
युवतीत्यपि तत्राद्यात्समूहार्थेऽपि यौवनम् ॥ ७४३ ॥
पुंवद्भावस्तु भस्याढ इति वार्तिकशासनात् ।
द्वितीयादनुदात्तादेरञि यौवतमिष्यते ॥ ७४४ ॥
पूर्वस्मादपि भिक्षादिपाठाद्वृत्तिकृतो मते ।
तत्सामर्थ्येन पुंवत्वाभावे यौवतमूचिरे ॥ ७४५ ॥
हायनान्तयुवादिभ्योऽणित्यण् यदि विधीयते ।
तदापि यौवनं यूनो भावे कर्मणि च स्मृतम् ॥ ७४६ ॥
युवाखलतिसूत्रेण खलत्याद्यैस्समस्यते ।
युवा च युवतिर्लिङ्गविशिष्टपरिभाषया ॥ ७४७ ॥
युवखलतिर्युवखलती युवपलितश्चापि युवपलिता ।
युववलिनो युववलिना च युवजरन्युवजरत्यपि प्रोक्ताः ॥

१. Vā. VI-iii-35.
२. Pā. V-i-130.
३. Pā. II-i-67.
४. Pāribhāṣā 72.

कर्मधारयजातीयदेशीये पुंवदुक्तितः ।
स्त्रियो युवखलत्याद्याः साधनीया मनीषिभिः ॥ ७४९ ॥

युवाल्पयोर्यदि कनादेश इष्ठेयसोर्भवेत् ।
स्थूलदूरेऽति चेल्लुप्तं पक्षे परयणाद्यपि ॥ ७५० ॥

गुणः पूर्वस्य च तदा स्यातां युवतमे क्रमात् ।
कनिष्ठश्च यविष्ठश्चेत्युभौ युवतरे त्वमू ॥ ७५१ ॥

कनीयांश्च यवीयांश्च वृषा कर्णमहेन्द्रयोः ।
वस्वश्वयोरस्य भत्वे वृषण्वस्वश्वयोरपि[रिति] ॥ ७५२ ॥

भवेद्वृषण्वसुरिति वृषणश्च इति द्वयम् ।
तक्षा स्याद्वर्धकौ पुंसि ण्ये त्वस्मात्कारिलक्षणे ॥७५३॥

ताक्षण्योऽण्युपसंख्यानात्ताक्ष्णोऽप्येतत्सुते स्मृतौ ।
नडाद्यन्तर्गणे तैक्षन्नलोपश्चेति कुञ्विधेः ॥ ७५४ ॥

छप्रत्यये तक्षकीयः कथितश्चातुरर्थिके ।
ग्रामकौटाभ्यां च तक्ष्ण इति तत्पुरुषे टचि ॥ ७५५ ॥

ग्रामतक्षो ग्रामनिघ्ने कौटतक्षः स्वतन्त्रके ।
राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः ॥ ७५६ ॥

राजकं राजवृन्दे स्याद्राजन्यः क्षत्रिये स्मृतः ।
राजन्यकं तत्समूहे राजपुत्रे गणे त्विह ॥ ७५७ ॥

स्याद्राजपुत्रकं गोत्रोक्षोष्ट्रेत्यिति वुञ्विधेः ।
राजन्यानां च विषयो देशो राजन्यकः स्मृतः ॥७५८॥

१. Pā. VI-iv-150. ३. Pā. V-iv-95.
२. Pā. IV-ii-91. Gaṇasūtra 2 ४. Pā. IV-ii-39.

सुराज्ञि त्रिषु राजन्वान् देशादौ परिकीर्तितः ।
असमासे यका राज्यं राज्ञो भावे च कर्मणि ॥ ७५९ ॥

सौराज्यमाधिराज्यादिब्राह्मणादिष्यञि स्मृतम् ।
छे शैषिके राजकीयो राज्ञः कैचविधानतः ॥ ७६० ॥

राजान्तादिहराजाहरिति तत्पुरुषाट्टचि ।
महाराजप्रभृतयोऽदन्ताः शब्दाः प्रसाधिताः ॥ ७६१ ॥

स्यान्माहाराजिको भक्तिः महाराजोऽस्य चेट्ठञि ।
राजसूयः क्रतौ राजोपपदात् क्यबूविधेस्युङः[धेः सुञः] ॥

ईदृशाट्ट्ग्विधेर्हन्तेः राजघो राजहन्तरि ।
राजयुध्वा राजकृत्वा स्याच्चेद्युधिकृञोः क्वनिप् ॥७६३॥

वसोश्चेति [वनो र[३] चेति] स्त्रीराजकृत्वरीङीप्रयोस्स्मृता ।
वैनो न हश इत्येतौ न स्यातां राजयुध्वनि ॥ ७६४ ॥

धन्व क्लीबे शरासे स्यान्मरुदेशे पुमानयम् ।
औष्ट्रकं नाम धन्वेति भाष्ये ह्रस्वान्तदर्शनात् ॥ ७६५ ॥

मरुदेशे क्लीबमपि धन्वशब्दं प्रचक्षते ।
व्रीह्यादित्वादिना तस्माद्धन्वी धानुष्कवाचकः ॥७६६॥

गत्यर्थोऽयं धविर्धातुरिति[धन्विधातुरिह] सूत्रैकगोचरः ।
घुवा त्वभिगते सूर्ये द्रुत्वा मरुति सारसे ॥ ७६७ ॥

दिवसेन्धे द्युतिकरे बुधैः प्रतिदिवा स्मृतः ॥
सप्ताष्ट चेति षट् संज्ञावेतौ संख्याभिधायकौ ॥ ७६८ ॥

सप्यशूभ्यां तुट् च ॥
॥ १-१४९ ॥

१. Pā. IV-ii-140.
२. Pā. IV-i-7.
३. Vā. IV-i-7.
४. Mahābhāsya under IV-ii-104, Vār. 31.

अपत्ये पुंसि शब्दानां[सप्तानां] साप्तिबाह्वादिजादिञः ।
सख्ये साप्तपदीनं स्यादाप्यत्वात्सप्तभिः पदैः ॥ ७६९॥

पूरणे डटि नान्तादसंख्यादेर्मटि चानयोः ।
सप्तमोऽष्टम इत्येतौ क्रमेण कथिताविह ॥ ७७० ॥

भागे प्रागेकादशभ्योऽछन्दसीत्यनि सप्तमः ।
पञ्चकत्वे तु भागस्य ञानोर्लुक्यष्टमो मतः ॥ ७७१ ॥

ञानावपि यथाप्राप्तं कन्लुकौ चेति चोक्तितः ।
लुक्पूरणस्य वा तावतिथं ग्रहणमित्यतः ॥ ७७२ ॥

कन्प्रत्यये[ये त्व]ष्टमकमष्टकं ग्रहणं द्विधा ।
गृह्णात्यसौ तावतिथेनेति कन्नित्यमेव लुक् ॥ ७७३ ॥

पूरणस्याष्टकस्तेन ग्रहीतरि निरूपितः ।
अन्येषु पूरणेष्वेवमूह्यतां सूक्ष्मदर्शिभिः ॥ ७७४ ॥

अस्य परिमाणमष्टावध्यायाः सूत्रमष्टकं तेन ।
संख्यायाः संज्ञेत्याद्युक्त्या कनि पाणिनीयमिह कथितम् ॥

सूत्राच्च कोपधादित्यध्येतरि वेदितर्युपात्तस्य ।
लुक् प्रत्ययस्य यस्माद्वैयाकरणोऽष्टकः स्मृतस्तस्मात् ॥

अनशीतिः प्राक्शतगा संख्या यद्यष्टनः पराभवति ।
अबहुव्रीहिसमासे भवेदष्टादशाद्यात्वे ॥ ७७७ ॥

युक्ते तु गोभिरष्टाभिः शकटेऽष्टागवं स्मृतम् ।
अष्टाकपालमष्टासु स्यात्कपालेषु संस्कृते ॥ ७७८ ॥

१. Pā. V-ii-48.
२. Pā. V-ii-49.
३. Pā. V-ii-77.
४. Pā. V-i-58.
५. Pā. IV-iii-137.

हविष्यष्टापदं तु स्यात् स्वर्णे शारिफलेऽपि च ।
अष्टापदस्तु शरभे संज्ञायां दीर्घशासनात् ॥ ७७९ ॥

**नञि जहातेः ॥**
**॥ १-१५० ॥**

अहश्शब्दो नकारान्तो दिवसस्यैव वाचकः ।
अह्नां समूह इत्यर्थे स्यादाह्नं खण्डिकार्थेञि ॥ ७८० ॥

टिलोपो न भवेदह्नष्टखोरेवेति शासनात् ।
अहर्गणेन साध्ये स्यादहीनः खे सति क्रतौ ॥ ७८१ ॥

दिवाविभेत्यादिनास्मिन् कृञष्टे स्यादहस्करः ।
अतः कृकमिसूत्रेण विसर्गस्यायमत्र सः ॥ ७८२ ॥

द्व्यहत्र्यहोत्तमाहाद्याः पुंस्यदन्ताष्टिपि[ष्टचि] स्मृताः ।
सर्वैकदेशसंख्यातपुण्यसंख्याव्ययादिकः ॥ ७८३ ॥

अह्नादेशमहन् [देशो ह्यहः] शब्दस्समासान्तपरो भवेत् ।
तेन सर्वाह्नपूर्वाह्नसंख्याताह्नादयः स्मृताः ॥ ७८४ ॥

पुंलिङ्गा एव रात्राह्नाहाः पुंसीत्यनुशासनात् ।
सर्वाह्नादिषु णत्वोक्तिरह्नोदन्तादिति स्मृतेः ॥ ७८५ ॥

न संख्यादेस्समाहार इति तु प्रतिषेधतः ।
द्व्यहत्र्यहादौ नाह्नोक्तिः स्यात्तु द्व्यह्नप्रियादिषु ॥७८६॥

द्वयोरह्नोर्भवेद्व्यह्नो लुकि कालाट्ठञो द्विगोः ।
निर्वृत्तादिष्विहन्नन्तात् द्विगोरर्थेषु ठञ्खयोः ॥ ७८७ ॥

द्वैयह्निको द्व्यहीनश्च रात्र्यहःसूत्रतः स्मृतौ ।
अनित्यत्वात्समासान्तविधेर्नात्र टजादितः ॥ ७८८ ॥

१. Pā. IV-ii.45.
२. Pā. VI.iv-145.
३. Pā. III-ii-21.
४. Pā. VIII-iii-46.
५. Pā. II-iv-29.
६. Pā. VIII-iv-7.
७. Pā. V-iv-89.
८. Pā. IV-iii-11.
९. Pā. V-i-87.

प्राग्वतीयेषु कालाद्धि नेनैं निर्वृत्तमित्यपि ।
तैमभीष्टो भृतो भूतो भावीत्यर्था इहाश्रिताः ॥ ७८९ ॥

एष्वेवार्थेष्वद्विगौ तु ठञ्वशादाह्निकं भवेत् ।
द्वादशाहादयः काले मुख्या लाक्षणिका क्रतौ ॥७९०॥

द्वादशाह्निक्यादिरेषां दक्षिणाप्राग्वनेष्ठञि ।
यैज्ञाख्येभ्य इति व्याख्याग्रहणं तत्र यत्कृतम् ॥ ७९१ ॥

अकालादपि तेन स्यादुक्तासोर्थामिकी ततः ।
सौयं चिरमिति प्राह्णशब्दादेदन्ततां गतात ॥ ७९२ ॥

निपातनेन ट्युट्युलभ्यां तुटि प्राह्णतनं विदुः ।
पूर्वाह्णतनपूर्वाह्णतनपौर्वाह्णिकास्त्रयः ॥ ७९३ ॥

उक्ता विभाषौ पूर्वाह्णेत्यादिना ट्युट्युलोष्ठञि ।
स्युरेवमेवापराह्णतनाद्याः शैषिकार्थकाः ॥ ७९४ ॥

सप्तम्यलुग्विकल्पस्तु घँकालतनसूत्रतः ।
कौलात्तदस्य सोढं चेत्प्रत्ययः प्रथमान्ततः ॥ ७९५ ॥

पूर्वाह्णतनपौर्वाह्णिकावेवमपराह्णतः ।
घकालयोरपि प्राग्वदूह्यः सप्तम्यलुग्विधिः ॥
सुबन्तात्तद्धितोत्पत्तिरिति ज्ञाप्यमिहालुका ॥ ७९६ ॥

पूर्वाह्णकोऽपराह्णक इति पूर्वाह्णापराह्णसूत्रेर्ण ।
पूर्वाह्णेऽप्यपराह्णे जातो वुन्प्रत्यये क्रमात् कथितः ॥ ७९७

अग्नुक्षन् पूषन् — एते त्रयोदश कनिन्प्रत्ययान्ताः ॥
प्लीहन् क्लेदन् स्नेहन् — शुनके श्वा भसंज्ञायां संप्रसारण्यतद्धिते ।

१. Pā. V-i-79.
२. Pā. V-i-80.
३. Pā. V-i-95.
४. Pā. IV-iii-23.
५. Pā. IV-iii-24.
६. Pā. VI-iii-17.
७. Pā. IV-iii-52.
८. Pā. IV-iii-28.

**मूर्धन् मज्जन् अर्यमन्** स्त्रियां शुनीति गौरादिगणेपाठेन ङीषिह ॥ ७९८ ॥

**विश्वप्सन् परिज्मन्** ङीप्तु नास्मिन्नुपपदे धेटः खशि शुनिन्धयः ।

**मातरिश्वन् मघवन्निति** प्रकृतेष्टित्वसामर्थ्यात् स्त्रीत्वे ङीपि शुनिन्धयी ॥७९९ ॥

॥ १-१५१ ॥

खशः खित्वाद्ध्रस्वमुमौ तत्रोत्तरपदे कृतौ ।
शुने हिते गवाद्युक्त्या शून्यं शुन्यमिति द्विधा ॥८००॥

शुनः समीपेऽव्ययीभावे चतुरेत्यादिनोपशुनं स्मृतम् ।
गोष्ठे तु वर्तमानः श्वा गोष्ठश्व इति कथ्यते ॥ ८०१ ॥

स्यादतिश्वः श्वानमतिक्रान्ते टचि कृते सति ।
अप्राणिषूपमानार्थादाकर्षे श्वादिकेऽपि टच् ॥ ८०२ ॥

क्विबन्तोऽवधृताश्वाविच्छल्ये न हि वृतीत्यतः ।
दीर्घत्वेनोत्तरपदाधिकारोक्तेन....तः[दीर्घतः] ॥ ८०३ ॥

दन्तदंष्ट्राकर्णकुन्दवराहेषु परेष्विह ।
दीर्घत्वं पुच्छपदयोरपि व्याचक्षते शुनः ॥ ८०४ ॥

तेन श्वादन्त इत्यादिरूपाण्यूह्यानि कोविदैः ।
श्वापदो मृगभेदे स्यात्पदान्तस्यादिना त्विह ।
शौवापदः श्वापदश्चेत्यैजागमविकल्पनात् ॥ ८०५ ॥

श्वगणेन चरत्यर्थे श्वगणाट्ठञ् चेति ठञ्ठनोरुक्त्या ।
श्वागणिकः श्वगणिक इत्यनयोः स्त्रीत्वे तु ङीब्ङीषौ ॥

श्वनिशं श्वनिशेत्येतच्चतुर्दश्यां द्वयं स्मृतम् ।
सूत्रे विभाषा सेनेति क्लीबत्वस्य विकल्पनात् ॥ ८०७ ॥

१. Pā. IV-i-41.
२. Pā. V-i-2.
३. Pā. V-iv-77.
४. The reading in both the mss. is :—क्विबन्ते विधृताश्वाचिछल्ये न हि कृतीत्यतः ।
५. Pā. VI-iii-116.
६. Vā-iii-130.
७. Pā. VII-iii-9.
८. Pā. IV-iv-11.
९. Pā. II-iv-25.

उक्षा वृषे तत्समूहे वुञ्यौक्षकमुदाहृतम् ।
औक्षं स्यादनपत्येऽणि स्यादौक्ष्णोऽपत्यवाचिनि ॥८०८॥

उक्षण्युक्षतरः स्वल्पेष्टरचाश्वतरो यथा ।
जातोक्षश्च महोक्षश्च वृद्धोक्षश्चेत्यमी त्रयः ॥ ८०९ ॥

जाते महति वृद्धे च क्रमेण वृषभे स्मृताः ।
सूत्रादचतुरेत्यादेः पूषा दिनकरे पुमान् ॥ ८१० ॥

प्लीहा तु कुक्षिरोगे ना गत्यर्थात् प्लिहतेरिह ।
निपात्य उपधादीर्घः क्लेदौषधिशशाङ्कयोः ॥ ८११ ॥

स्नेहा सुहृदि चन्द्रेऽर्के मूर्धा स्यान्मस्तके पुमान् ।
बहुव्रीहौ द्विमूर्धत्रिमूर्धौ षप्रत्यये स्मृतौ ॥ ८१२ ॥

मज्जा पुमानस्थिसारे टाबन्तोऽप्ययमिष्यते ।
अर्यमा तु पुमान् सूर्ये पितृदेवान्तरेऽपि च ॥ ८१३ ॥

पूषार्यम्णोः सर्वनामस्थाने यद्दीर्घशासनम् ।
शिस्वोर्नियमितं तेन न तदन्यत्र कल्पते ॥ ८१४ ॥

विश्वप्सा वीतिहोत्रे ना परिज्मा वह्निचन्द्रयोः ।
उत्पाद्याज्ञेरिमं प्राहुः परितो गन्तरीतरे ॥ ८१५ ॥

केचित्तु ज्योर्यणादेशे परिज्वेति बभाषिरे ।
न तत्साधु यतो लक्ष्यविरोधः सर्वतः स्फुटः ॥ ८१६ ॥

मातरिश्वा पुमान् वायौ मघवान् वज्रिणीति दिक् ।
मघवा बहुलं सूत्रे तृभावस्य विकल्पनात् ॥ ८१७ ॥

तकारान्तनकारान्तवुभावेताविति स्थितम् ।
नकारान्तः पुनरसौ युववत्संप्रसारणे ॥ ८१८ ॥

1. Pā. V-iv-77.

श्वन्नुक्षन्निति सूत्रान्त इतिशब्दो ह्ययं कृतः ।
आद्यर्थत्वात्परत्रापि कनिनः कल्पने क्षमः ॥ ८१९ ॥

पञ्चेति षट्चतुर्मध्यसंख्यावाचीति दृश्यते ।
हञ्चिस्तु [पाञ्चिस्तु] तदपत्ये स्याद्बाह्वादीञः प्रवर्तनात् ॥

पूरणे पञ्चमः स्त्रीत्वे टित्वान्ङीपीह पञ्चमी ।
पुंवद्भावनिषेधेन पूरण्यामब्विधेरपि ॥ ८२१ ॥

बहुव्रीहौ हि कल्याणी पञ्चमा रात्रयः स्मृताः ।
अप्राधान्ये तदुभयाभाव इत्यवधारणात् ॥ ८२२ ॥

कप्यह्रस्वे च कल्याणपञ्चमीकोऽन्य एव सः ।
पक्षस्तिरोहिताङ्गत्वाद्रात्रिरत्रोपसर्जनम् ॥ ८२३ ॥

पञ्चपरिमाणमस्य स्यात्पञ्चकोऽत्र सङ्घादौ ।
वर्गे तान्तः पञ्चत् पञ्चक इत्याद्यसौ भवति ॥ ८२४ ॥

दिक्संख्ये संज्ञायामिति[1] सूत्रप्राप्तकर्मधारयतः ।
पञ्चजनाश्चत्वारः कथिता रथकारपञ्चमा वर्णाः ॥ ८२५ ॥

पञ्चजनीनं तेभ्यो हितमिति खस्योपसंख्यानात् ।
पञ्चभिरेतैर्भूतैः जायन्ते तेन पञ्चजनाः ॥ ८२६ ॥

करणेऽपि शेषषष्ठ्या सह भवति समाससंपत्तिः ।
जनयन्तीति ण्यन्तादचि जनशब्देऽभिनिर्वृत्ते ॥ ८२७ ॥

भूतानि पञ्च येषां जनानि तेष्वेव पञ्चजनशब्दः ।
छे पञ्चजनीयः स्यात्पञ्चजनादिष्वकर्मधारयतः ॥ ८२८ ॥

स्मृतः पञ्चजनो रक्षोविशेषे तद्भवो हरेः ।
शङ्खस्तु पाञ्चजन्यः स्यादौपसंख्यानिकञ्यतः ॥ ८२९ ॥

1. Pā. II-1-50.

पङ्क्तिविंशतिसूत्रेण पङ्क्तिशब्दो निपातितः ।
पञ्चच्छब्दाद्रूढ एष इति नावयवादरः ॥ ८३० ॥

छन्दोविशेषं क्रमसन्निवेशं दशाख्यसंख्यामपि वक्ति पङ्क्तिः।
पञ्चाक्षरा पङ्क्तिरिह द्विजानां पङ्क्तिस्तथा पङ्क्तिरथो यथेति॥

युक्तायुक्तादिगणनापर्यालोचनया पुनः ।
पङ्क्तिर्हि दशमं छन्दः तेन केचिदशिक्षिताः ॥ ८३२ ॥

लक्षणां दशसंख्यायां पङ्क्तिशब्दस्य चक्षते ।
पराकृतमनेनैव दूरतस्तदपि स्मृतः ॥ ८३३ ॥

विंशत्यादिपदस्यापि शक्तिरेवोचिता यतः ।
अब्धिभूतरसाद्यास्तु साक्षात्तत्संख्ययान्विताः ॥ ८३४ ॥

लोके प्रसिद्धाः शब्दाश्च नेति संख्यानुलक्षकाः ।
दशानां पूरणी पङ्क्तिरिति तद्विदितं कथम् ॥८३५॥

दूरतो दूरतो गत्वा किं प्रमाणं तदाश्रये ।
प्रमाणज्ञानशून्योक्तिस्ततः सा नाहतेति दिक् ॥ ८३६ ॥

इति श्रीधरवंश्येन रचिते पेरुशास्त्रिणा ।
आद्यः पादः समाप्तोऽयमौणादिकपदार्णवे ॥ ८३७ ॥

अस्मिन् पादे "सप्यशूभ्यां तुट् च" इत्यनन्तरम् "नुदंशोर्गुणश्च" इति "सहेः षष् लुक् च" इति च सूत्रद्वयं नवन् दशन् षट् [षडिति] शब्दव्युत्पादकमुज्ज्वलदत्तेन व्याख्यातम् । एवम् "मृजेश्च" इत्यनन्तरम् "खण्डेश्च" इति सूत्रम् । एवमन्यैरपि तैस्तैर्वृत्तिकारैः कानिचित्सूत्राणि अधिकानि व्याख्यातानि । सूत्रक्रमभेदश्च तत्र भूयान् परिदृश्यते । पाठभेदांश्च भूयांस इति सांप्रदायिक एवाश्रित इत्यलं बहुना ॥

कामिनि कामद्विषतः कामितफलदायिनि प्रपत्तिजुषाम् ।
कामिह शरणयिताहे कामाक्षि विना दयावर्तीं भवतीम् ॥

१. Pā. V-i-59.

अम्ब कामाक्षि कल्याणि शम्बराराति जीविके ।
बिम्बशोणाधरे चन्द्रबिम्बकान्ताते नमः ॥
आद्ये पादेऽत्र सूत्राणि गिरिबाणेन्दुसंख्यया ।
उणादिषु प्रसिद्धानि मतेऽस्मिन् संप्रदायिनाम् ॥

" कृवापाजि " " यो द्रे च " " मद्गुरादयः" " कृषिचमितनि " " रमेर्वृद्धिः " " चापूखडिभ्यः " " सिविसिशुषिभ्यः " सप्तदश [?] ।

पादेऽस्मिन्नुक्ताः श्लोकास्त्विन्दुबाणवसुसंख्यया ।
अर्थेनापि समायुक्ताः श्रीमता पेरुशास्त्रिणा ॥

इत्युणादिषु प्रथमः पादः ॥



# अथ द्वितीयः पादः

कृहृभ्यामेणुः ॥ २-१ ॥ करेणुः स्त्री करिण्यां स्यात्कर्णिकारे गजे च ना ।
हरेणुः स्त्रीसतीने स्याद्रेणुकाकुलयोषितोः ॥ १ ॥

हनिकुषिनीरमिकाशिभ्यस्थक्[क्थन्] ॥२-२॥ हथो विषण्णे कुष्ठं स्यादस्त्री रोगसुगन्धयोः ।
नीथो नेतरि च स्तोत्रे रथः स्यन्दनकाययोः ॥ २ ॥

चरणे वेतसेऽप्येष विपश्चिद्भिः प्रयुज्यते ।
संज्ञायां भ्रितिखेच्यत्र सामभेदे रथन्तरम् ॥ ३ ॥

कुर्वादि रथकाराण्ये राथकार्यस्तदात्मजे ।
द्विजकल्पादयं कारिलक्षणो ण्यस्तु तादृशात्[४] ॥ ४ ॥

रथ्या च रथकट्या च रथवृन्देयकट्यचोः ।
रथस्येदमितीत्यर्थे रथ्यं चक्रे रथाङ्गेति ॥ ५ ॥

द्वयोस्तु रथयोरङ्गमित्युक्तौ द्विरथं स्मृतम् ।
रथसीताहलेभ्यो यद्विधानं हि तदन्ततः ॥ ६ ॥

रथोक्तेस्तद्वहत्यादौ वनजारपीह[द्विगोरिति न हीह] लुक् ।
भवेदाश्वरथं पैत्रपूर्वादञनुशासनात् ॥ ७ ॥

रथं वहति रथ्यः स्यात्तद्वहत्यादिना यति ।
प्राग्दीव्यतीयो नेत्यस्माद्विरथ्यादौ न लुग्भवेत्[७] ॥ ८ ॥

१. Pā. III-ii-46.
२. Both the mss. add रभवेत् प्रायस्मृतेः.
३. Pā. IV-iii-121.
४. Vā. IV-iii-121.
५. Pā. IV-iv-76.
६. Pā. IV-iii-122.
७. Both the mss. add रथेन चरतिष्ठति [ष्ठक्].

सूत्रे खलयवत्यादौ[1] चकारेण रथाद्यति[2] ।
स्याद्रथाय हिता रथ्या विशिखायामिति स्मृता ॥ ९ ॥

रथेन चरति प्रोक्तो रथिकोऽश्विकवत् ष्ठलि ।
कोः कद्भावो[3] यदि रथवदयोश्चेति[4] कद्रथः ॥ १० ॥

भवेत्प्रात्यग्रथिः साल्वावयवेत्यादिसूत्रतः[5] ।
तस्य राजन्यपत्ये च तद्राजेञ्प्रत्ययस्मृतेः ॥ ११ ॥

संज्ञायां[6] भृतिखच्यत्र सामभेदे रथन्तरम् ।
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥ १२ ॥

स्याद्दिशि स्थानमात्रे स्त्री काष्ठमाख्यातमिन्धने ।
इष्टिं दीक्षान्तकर्तव्यां पुंलिङ्गेऽवभृथं विदुः ॥ १३ ॥

अवे भृञः ॥ २-३ ॥

उषिकुषिगार्तिभ्यस्थन् ॥ २-४ ॥

रदच्छदे पुमानोष्ठः सामासे तु विकल्पनात् ।
पररूपस्य बिम्बोष्ठो बिम्बौष्ठ इति च द्विधा ॥ १४ ॥

प्रोष्ठीशफर्यो ङीषत्र नासिकोदरसूत्रतः[7] ।
प्रोष्ठो गवि प्रोष्ठपदाः स्युर्नक्षत्रे निपातनात् ॥ १५ ॥

सुप्रातसुश्वादिसूत्रे[8] पौर्णमास्येतदन्विता ।
भवेत्प्रौष्ठपदी नक्षत्राणां मासे तु यत्र सा ॥ १६ ॥

स स्यात्प्रौष्ठपदः प्रोष्ठपदाः स्युर्देवतास्य चेत् ।
महाराजप्रोष्ठपदाट्ठञित्युक्तानुशासनात्[9] ॥ १७ ॥

ठञि स्यात्प्रौष्ठपदिकं कोष्ठः कुक्षिकुसूलयोः ।
अन्तर्गृहेऽपि गाथा तु स्यादाभाणकवृत्तयोः ॥ १८ ॥

१. Pā. V-i-7.
२. Pā. IV-iii-121.
३. Pā. VI-iii-101.
४. Pā. VI-iii-102.
५. Pā. IV-ii-171.
६. Pā. III-ii-46.
७. Pā. IV-i-35.
८. Pā. V-iv-120.
९. Pā. IV-ii-35.

गाथाकारो नशब्देति टनिषेधादणा कृतः ।
अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने ॥ १९ ॥

व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु ।
यदर्थादनपेतं तदर्थ्यं स्याद्वाच्यलिङ्गकम् ॥ २० ॥

अर्थे[1] विभाषेत्यन्यस्य दुगागमविकल्पनात् ।
अन्यदर्थस्तथान्यार्थ इति द्वेधा स्मृतं बुधैः ॥ २१ ॥

अर्थान्नञ[2] इति ह्येतदुरःप्रभृतिषु स्थितम् ।
अनर्थकं बहुव्रीहौ समासान्तकपाततः ॥ २२ ॥

शु गताविति धातोस्तु शोथ इत्यत्र कश्चन ।
निर्वर्तितो बाहुलकादस्ति श्वयथुवाचकः ॥ २३ ॥

**सर्तेर्णित्** ॥ २-५ ॥ सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके ।

**जॄवृञ्भ्यामूथन्** ॥२-६॥ क्लीबे जरूथं मांसे स्याद्विशेषे त्वनुशासनात् ॥ २४ ॥

वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोः ।
अतो वरूथिनी सेनेत्यपि स्यादिनि कल्पिते ॥ २५ ॥

**पातॄतुदिवचिरिचिसि-** षड्धातवः ॥

**चिभ्यस्थक्** ॥ २-७ ॥ नवनीते जले पीथं पुमान् पीथो दिवाकरे ।
तीर्थं शास्त्रा[ध्वरक्षेत्रोपा]योपाध्यायमन्त्रिषु ॥ २६ ॥

अवतारर्षिजुष्टाम्भःस्त्रीरजस्सु च विश्रुतम् ।
परस्परं सतीर्थ्यास्ते य एकगुरुमन्त्रिताः ॥ २७ ॥

समानतीर्थे[3] वासीति प्राग्घितीयोऽत्र यत्कृतः ।
समानस्य सभावोऽत्र तीर्थे[4] य इति शिष्यते ॥ २८ ॥

1. Pā. VI-iii-100.
2. Pā. V-iv-151. See the gaṇasūtra.
3. Pā. IV-iv-107.
4. Pā. VI-iii-87.

तुत्थमञ्जनभेदे स्यात् [तुत्थोऽग्नावञ्जने] तुत्था नीली-
सूक्ष्मैलयोरपि ।
उक्थं सामविशेषे तल्लक्षणे त्वस्य लक्षणात् ॥ २९ ॥

तदधीते वेद वेति स्यादस्मादौक्थिकष्ठकि ।
धर्माम्नायावौक्थिकानामौक्थिक्ये टये प्रकीर्तिते ॥३०॥

चरणेभ्यो धर्मवदित्यतिदेशाद्गणेऽप्यदः ।
मुख्योक्थाद्वगणौ नेष्टौ रिक्थं तु द्रविणे स्मृतम् ॥३१॥

रुचेः स्तुत्यर्थकाद्रुक्थमपि बाहुलकादिह ।
सिक्थो भक्तपलापेन [भक्तपुलोके ना] मधूच्छिष्टे
नपुंसकम् ॥ ३२ ॥

**अर्तेर्निरि ॥ २-८ ॥**

निरृथं साम्नि हिंसायां निरृथः पुंसि कुत्रचित् ।

**निशीथगोपीथावगथाः ॥ २-९ ॥**

निशीथस्तु पुमार्थेत्तेस्याद[पुमानर्धरात्रे स्याद्रा]त्रिमात्रके ॥

अर्धरात्रार्थकादस्मादिनौ निशि निशीथिनी ।
गोपीथो यजमाने ना तीर्थे स्यादेष न द्वयोः ॥ ३४ ॥

प्रातःस्नायिन्यवगथः प्रातस्सवनसोमयोः ॥

**गश्चोदि ॥ २-१० ॥**

सामभागविशेषे तु बुधै····[रुद्गीथ उ]च्यते ॥ ३५ ॥

**समीणः ॥ २-११ ॥**

समिथोऽस्त्री रणे वह्नौ दृष्टो वेदनिघण्टुषु ॥
पञ्च शब्दाः ॥

**तिथपृष्ठगूथयूथप्रोथाः ॥ २-१२ ॥**

तिथः पुंस्यलकेशालेवे[पुंस्यनले कामे] पृष्ठं तु चरमे तनोः॥

देहावयवभेदेऽपि····[क्वचित्स्तोत्रे च] दृश्यते ।
पृष्ठानां निकुरुम्बेऽपि पृष्ठ्यमाहुर्नपुंसकम् ॥ ३७ ॥

विष्ठायां तु भवेद्गूथं दीर्घोऽत्रैव निपातनात् ।
यूथी····[पुष्प]प्रभेदे स्यान्मागध्यां च कुरण्टके ॥३८॥

1. Pā. IV-11-59. 2. Pā. IV-11-46.

यूथं तिर्यक्समूहे च प्रथमान्तेऽपि [वृन्दमात्रेऽपि]
भाषितम् ।
यूथ्यो यूथभवे प्रोक्तो दिगादिभ्यो यदीरणात्॥ ३९ ॥

प्रोथोऽश्ववेगे घोणायां नटस्त्रीगर्भयोरपि [नाकट्या-
मध्वगे त्रिषु] ।
प्रस्थि····[ते च] भवेदेष वाच्यलिङ्गो बुधैः स्मृतः॥ ४०॥

निपातनात्प्रोथशब्दे गुण इत्यवबुध्यते ॥

स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्धुन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्॥२-१३॥

द्वात्रिंशद्धातवः । दम्भिवहिवसि इति ऊह्यादिकं[?]
केचित्पेठुः ॥
स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे ॥ ४१ ॥

तक्रं तु गोरसे क्लीबं पादमात्राम्बुमिश्रिते ।
त्रिषु वक्रोऽनृजौ भौमे पुटभेदे शनैश्चरे ॥ ४२ ॥

न्यङ्क्वादिपाठतः कुत्वं तञ्चिवञ्च्योर्विभाव्यताम्[1] ।
शक्रो महेन्द्रे कुटजार्जुनभूरुहयोरपि ॥ ४३ ॥

क्षिप्रं तु त्वरिते क्लीबं भेद्यगामि त्विदं त्रिषु ।
क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् ॥ ४४ ॥

क्षुद्रा व्यङ्गानटीकम्पि[कण्ट]कारिकासरघासु च ।
चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि ॥ ४५ ॥

स्थूलदूरेति लुप्येत यणादीह परं यदि ।
गुणः पूर्वस्य च क्षिप्रक्षुद्रयोरिष्ठनादिषु[2] ॥ ४६ ॥

क्षेपिष्ठः क्षेपिमा क्षिप्रात् क्षोदिष्ठः क्षोदिमा क्षुद्रात् क्षोदीयानिति च त्रयम् ।
सृप्रश्चन्द्रेऽथ तृप्रो ना पुराडाशे द्वयोर्न चेत् ॥ ४७ ॥

आज्ये काष्ठे च दुःखे चेत्याहुरर्थविशारदाः ।
इ....[ष्ठनादौ त्रपि]ष्ठश्च त्रपीयानिति च द्वयम् ॥४८॥

1. Pā. IV-iii-54. 2. Pā. VI-iv-156.

प्रियस्थिरेत्यादिसूत्रे त्रपादेशविधानतः ।
त्रपुं न सहते यस्तु स तुप्रालुरिति स्मृतः ॥ ४९ ॥

चालुः शीतोष्णतृप्रेभ्यः स्यात्तस्यासहने यतः ।
द्रप्रः पुमान् बलवति भवेद्धन्द्रस्तु पूजके ॥ ५० ॥

उद्रो जलचरेऽब्धौ संपूर्वः श्वित्रं रुजाभिदि ।
वृत्रो रिपौ घनध्वाण्डे [ध्वनौ ध्वान्ते] शैले चक्रे च दानवे ॥

वृत्रहा वज्रिणि ब्रह्मभ्रूणवृत्रेष्विति क्विपि ।
पूषार्यमवदस्यापि दीर्घः शिस्वोः परत्र न ॥ ५२ ॥

वीरस्तु सुभटे श्रेष्ठे राहौ स्कन्दकुबेरयोः ।
पुरुहूते च शंभौ च वीरं शृङ्गान्तरेऽपि च ॥ ५३ ॥

वीरयोधादयः पूर्वापरप्रथमसूत्रतः ।
एकवीरो बाहुलकात्साधनीयो मनीषिभिः ॥ ५४ ॥

वीरस्य कर्मभावो वा वैरमित्यभिधीयते ।
वैरकारो नैशब्देति टनिषेधादणा कृञः ॥ ५५ ॥

क्लीबे नीरं पुंसि पद्रः सलिलग्रामयोः क्रमात् ।
देशभेदे च सन्तोषे मद्रः पुंसि निगद्यते ॥ ५६ ॥

मद्रेभ्योऽञिति दिक्पूर्वपदाज्जनपदार्थकात् ।
अञि शेषे पौर्वमद्रापरमद्रौ स्मृतावतः ॥ ५७ ॥

मद्राणामिति ह्युक्त्या वृद्धिर्मद्रे न संभवेत् ।
नगरत्वेऽपि दिक्शब्दादादिवृद्धिरियं ततः ॥ ५८ ॥

मद्रंकरो मद्रकार इति खच्यणि च क्रमात् ।
मद्राकृतस्तु डाजुक्त्या मुण्डिते स्याद्विशेषवत् ॥ ५९ ॥

१. Pā. VI-iv-157.
२. Vā. V-ii-122, 6.
३. Pā. III-ii-78.
४. Pā. II-i-58.
५. Pā. III-ii-23.
६. Pā. IV-ii-108.
७. Pā. VII-iii-13.

मुद्रा प्रत्ययकारिण्यां खिद्रो रोगदरिद्रयोः ।
छिद्रं रन्ध्रे दूषणे च भिद्रं वज्रे प्रकीर्तितम् ॥ ६० ॥

मन्द्रः स्वरविशेषे ना चन्द्रो····[ऽम्बुनि हिमद्यु]तौ ।
कर्पूरे शोचरूप्ये [मेचरूपे च] सुधायामपि न द्वयोः ॥

चन्देः पचाद्यचि भवेत्सुधांशौ चन्द इत्यपि ।
दह्रो वैश्वानरे दस्रः खरस्वर्लोकवैद्ययोः ॥ ६२ ॥

दभ्रः स्वल्पे समुद्रेऽपि स्यादुस्रः किरणे तरौ ।
अर्जुन्यामुपचित्रायामप्युस्रा परिकीर्तिता ॥ ६३ ॥

अत्र शासिवसीत्यादिषत्वं नरैपरेति न ।
वाश्रो ना दिवसे वाश्रं मन्दिरेऽपि चतुष्पथे ॥ ६४ ॥

पुंस्येष राक्षसे [रासभे] पक्षिण्यपिशब्दान्विते त्रिषु ।
शीरस्त्वजगरे हस्रो मूर्खे सिध्रस्तु सज्जने ॥ ६५ ॥

शुभ्रं स्यादभ्रके क्लीबं त्रिषु शुक्लप्रदीप्तयोः ।
शुभ्राव [शुभ्रापत्ये] तु शौभ्रेयः शुभ्रादिभ्यश्च ढग्विधेः ॥
दम्भेः पश्चाद्रहि पेठुः केचिदुष्ट्रे वृषे तथा ॥

मुसेररक् ॥२-१४ ॥ मुसरो मुसले मुस्रेऽप्येष बाहुलकात्क्वचित् ॥ ६७ ॥

चकिरम्योरुच्चोपधायाः ॥ २-१५॥ "चकिचम्योः" इति केचित् ॥
चुक्रुरित्येष कथितः तथाम्लेऽप्यम्लवेतसे ।
चुक्री चाङ्गेरिकायां च वृक्षाम्ले चुक्रमिष्यते ॥ ६८ ॥

रुम्रोऽरुणे पाठभेदाच्चुम्रो नाशविषण्णयोः ॥

वौ कसेः ॥ २-१६ ॥ विकुस्रः पुंसि चन्द्रे स्यात्कमले तु नपुंसकम् ॥ ६९ ॥

१. Pā. VIII-iii-60.
२. Pā. VIII-iii-110.
३. Pā. IV-i-123.

अमितम्योर्दीर्घश्च॥२-१७॥ आम्रः पुंसि रसाले स्यात्ताम्रं शुल्बेऽरुणे त्रिषु ॥

निन्देर्नलोपश्च ॥२-१८॥ निद्रा बाह्येन्द्रियज्ञानविरामे परिकीर्तिता ॥ ७० ॥

अर्देर्दीर्घश्च ॥ २-१९ ॥ आर्द्रा नक्षत्रभेदे स्त्री क्लिन्ने स्यादभिधेयवत् ।

आर्द्राज्जातस्त्वार्द्रकः स्यात्पूर्वाह्णेत्यादिना वुनि ॥ ७१ ॥

शुचेर्दश्च ॥ २-२० ॥ शूद्रस्तु वृषले गोपे त्वयं महदनन्तरः ।

स्त्रियां शूद्री तु पुंयोगे जातौ शूद्रेति टाब्वशात् ॥७२॥

आभीर्यां तु महाशूद्री जातिपुंयोगयोः समा ॥

दुरीणो लोपश्च ॥२-२१॥ क्लीबे दूरं विप्रकर्षे विप्रकृष्टे तु वाच्यवत् ॥ ७३ ॥

इदमत्यन्तवचनेऽप्यनुभूतमितस्ततः ।

शैषिकार्थेषु दूरेत्यो दूरादेत्यं इति त्रिषु ॥ ७४ ॥

स्थूलदूरेति लुप्येत यणादीह परं यदि ।

गुणः पूर्वस्य च भवेत्क्रमादिष्ठेयसोस्तथा ॥ ७५ ॥

दविष्ठश्च दवीयांश्च विबुधैः कथितावुभौ ।

अन्तात्यन्तेति सूत्रेण गमेर्डे दूरगस्त्रिषु ॥ ७६ ॥

विदूरात्तु प्रभवतीत्यर्थे वैदूर्यमुच्यते ।

विदूराञ्ञ्य इति ञ्येन मध्यदन्त्यो मणाविह ॥ ७७ ॥

प्रकृत्यन्तरतापक्ष एतदुक्तं समञ्जसम् ।

अन्ये त्विमं वालवायशब्दस्यादेशमूचिरे ॥ ७८ ॥

कृतेश्छः क्रू च ॥२-२२॥ कृच्छ्रमाख्यातमाभीले पापसान्तपनादिनोः ।

क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत् ॥ ७९ ॥

रोदेर्णिलुक् च ॥२-२३॥ रुद्रः शिवे शैषिकेऽणि रौद्रो नाट्यरसान्तरे ।

उक्तोऽतिभीषणे तीव्रे रौद्री स्कन्दस्य मातरि ॥ ८० ॥

१. Pā. IV-iii-24.
२. Vā. VIII-iii.101.
३. Pā. VI-iv-156.
४. Pā. III-ii-48.
५. Pā. IV-iii-84.

शतं रुद्रा देवता स्युः यस्य तत्कथ्यते हविः ।
शतरुद्रियमेवं हि शतरुद्रीयमित्यपि ॥ ८१ ॥

[1]शतरुद्राद्घश्च सूत्रे घश्छयोरनुशासनात् ।
अनयोर्विधिसामर्थ्यात् द्विगोर्लुगिति नात्र लुक् ॥ ८२ ॥

**बहुलमन्यत्रापि संज्ञाछन्दसोः ॥२-२४॥**

अत्र रोदेर्णिलुक् चेति वर्तमाने णिलुक्पदे ।
उक्तं बहुलमन्यत्रापि संज्ञाछन्दसोरिति ॥ ८३ ॥

संज्ञायां शंभुरीशाने शं भावयति यत्नतः ।
[2]वर्धन्तु त्वा सुष्टुतय इति तु छन्दसीति दिक् ॥ ८४ ॥

भवेदेवं बाहुलकादसंज्ञाछन्दसोरपि ।
वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ॥ ८५ ॥

इति तस्योदाहरणं प्रेक्षावद्भिर्विमृश्यताम् ॥

**जोरी च ॥२-२५॥**

जुःसौत्रो धातुः । ज्यश्चेत्येके ॥

जीरः खड्गे वणिग्द्रव्ये जोरी चेत्यनुशासनात् ॥ ८६ ॥
[3]भाष्यकारवचोरीत्या जिनातेरप्यसौ भवेत् ॥

**सुसूधागृधिभ्यः क्रन् ॥ २- २६ ॥**

सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित् ॥ ८७ ॥

कन्प्रत्यये सुरावर्णः सुरकोऽहिर्निगद्यते ।
सुराशीष्वोष्टकि ष्टत्वात्सुरापी मद्यपायिनी ॥ ८८ ॥

सूरः पुंसि प्रकथितो विबुधैरुष्णदीधितौ ।
धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे ॥ ८९ ॥

सिन्धौ च गृध्रस्तु भवेत्खगभेदातिलुब्धयोः ॥

**शुसिचिमीनां दीर्घश्च ॥ २-२७ ॥**

चत्वारो धातवः । शुस्तालव्यादिर्गत्यर्थः ॥

शूरो ना कुक्कुटे वीरे तपने यादवे भटे ॥ ९० ॥

1. This occurs as Vārtika under IV-ii-28.
2. ṚV. VII-99-7.
3. Mahābhāṣya on I-i-4, 6.

बाह्वादित्वादिञा शौरिर्नाणृष्यैन्धकसूत्रतः ।
सीरोऽर्कहलयो. पुंसि सीरस्येदन्तु सैरिकम् ॥ ९१ ॥

तस्येदमित्यतः पश्चाद्धलसीराट्ठगित्यतः ।
सूत्रादेतादृशन्यासात्तद्वहत्यधिकारणात् ॥ ९२ ॥

प्राग्वत्सीरं वहत्यर्थे सैरिकं वाच्यलिङ्गकम् ।
ठका प्राग्वहतीयेन तेन दीव्यतिसूत्रतः ॥ ९३ ॥

सीरेण खनतीत्यर्थे सैरिकः कथितो नरः ।
एवं प्राग्वहतीयेषु युक्तेष्वर्थेषु चिन्त्यताम् ॥ ९४ ॥

तिरस्करिण्यां स्त्रीलिङ्गे प्रतिसीरा निगद्यते ।
वाय्वर्थस्य शुनस्योत्थे सीरेणादित्यवाचिना ॥ ९५ ॥

द्वन्द्वेऽत्र देवताद्वन्द्वे चेत्यानङि निरूपितौ ।
शुनासीरौ देवतास्येत्यर्थे छे यति च क्रमात् ॥
शुनासीरीयमपि च शुनासीर्यं द्विधा भवेत् । ९६ ॥

चीरन्तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च ।
रेखालेखनभेदेऽपि चीरी झिल्यां स्त्रियां मता ॥ ९७ ॥

भवेत्कृच्छ्राटिकायां च मीरस्तु जलधौ पुमान् ।
बाविन्धेः ॥ २-२८ ॥ वीध्र तु विमले वाच्यलिङ्गकं परिकीर्तितम् ॥ ९८ ॥

अग्नौ वायौ च पुंसि स्यात्क्लीबं पूर्णेन्दुमण्डले ।
इन्धेश्च व्यपुसर्गस्य सन्धितो दीर्घभागिदम् ॥ ९९ ॥

वृधिवपिभ्यां रन् ॥ २-२९ ॥
वध्रं चर्मण्याद्युदात्तं रपरत्वाद्गुणे द्विरम् ।
एधत्यर्थाद्वृधेरेतदत्र सूत्रे रनि स्मृतम् ॥ १०० ॥

१. Pā. IV-i-96.
२. Pā. IV-i-114.
३. Pā. IV-iii-120.
४. Pā. IV-iii.124.
५. Pā. IV-iv-2.
६. Pā. I-i-31.

रज्जावण्प्रत्यये तस्यै विकार इति सूत्रतः ।
वार्ध्री दीर्घादिका टिड्ढाणञित्याद्युक्तङीब्वशात् ॥
वध्रीति त्वेकरेफा स्याद्वक्ष्यमाणे ववेष्ट्वनि ।
ह्रस्वादिका वरत्रायां चैर्मणोऽञित्यञित्वतः ॥ १०२ ॥

विकृत्यर्थाच्चतुर्थ्यन्तात्तदर्थप्रकृतौ कृते ।
वध्र्यां इदमिति ह्यर्थे वार्ध्रं चर्मेति चक्षते ॥ १०३ ॥

वप्रस्तु स्यात्तीरतातप्राकारक्षेत्रसेतुषु ।
स्कन्दे प्रजापतौ चापि प्रपातेऽपि च कथ्यते ॥१०४॥

ऋज्रेन्द्राग्रवज्र-विप्रकुब्रचुब्रक्षुरखुर-भद्रोग्रभेरभेलशुक्र-शुक्लगौरवन्रेरा-मालाः ॥ २-३० ॥

रन्नन्ता एकोनविंशतिः ॥

ऋज्रो नेतरि नेन्द्रस्तु वासवार्कवृषात्मसु ।
शब्दान्तरात्परस्त्वेष भवेदीश्वरवाचकः ॥ १०५ ॥

ईन्द्रियं तु यदिन्द्रस्य लिङ्गं तत्र निगद्यते ।
इन्द्रेणैवं दृष्टसृष्टजुष्टोदत्तादिकेष्वपि ॥ १०६ ॥

महेन्द्रो देवतास्येति त्वर्थे घाणछे क्रमादिह ।
शब्दास्त्रयोऽमी महेन्द्राद्घाणौ चेत्यनुशासनात् ॥१०७॥

महेन्द्रीयं च माहेन्द्रं महेन्द्रियमिति स्मृताः ।
ग्रन्थेऽधिकृत्य स्यादिन्द्रजननीयं कृते छतः ॥ १०८ ॥

सूत्राच्छिशुन्क्रदयमसभद्रन्द्वेति दर्शितात् ।
उपेन्द्रः पुंसि विबुधैर्नारायण इति स्मृतः ॥ १०९ ॥

उपेन्द्रदत्त इत्यतो मनुष्यनामतो यदा ।
क उच्यतेऽनुशंसितान्नयेन तद्युतादपि ॥ ११० ॥

१. Pā. IV-iii-134.
२. Pā. V-i-15.
३. Pa. V-ii-93.
४. Pā. IV-ii-29.
५. Pā. IV-iii-87.
६. Pā. IV-iii-88.

ठजेकदा च बेह्वचो मनुष्यनाम्न इत्यतः ।
तथैव घन्निलज्द्वयं भवेदिहास्य सूत्रतः ॥ १११ ॥

प्राचामुपादेरित्यस्मादपि स्यातामडज्वुचौ ।
ठाजादावूर्ध्वमित्युक्त्या द्वितीयादूर्ध्वलोपतः ॥ ११२ ॥

उपेन्द्रदत्तकोपिकोपिलोपियोवडोपकाः[?] ।
षडीरिता बुधैरिवाधिकारपूर्वदर्शिताः ॥ ११३ ॥

अग्रं पुरस्तादुपरि परिमाणे पलस्य च ।
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ॥११४॥

अधिके च प्रधाने च प्रथमे चाभिधेयवत् ।
शैशिकेषु डिमन्यस्माज्जातादिष्वग्रिमं त्रिषु ॥ ११५ ॥

अग्रे साधु यदग्र्यं तत्प्राग्घितीये यति स्मृतम् ।
अग्रयमग्रमिवेत्यर्थे शाखादिभ्यो य इत्यतः ॥ ११६ ॥

अग्र्यमग्रय्यमग्रीयमित्यग्रभववाचिनः ।
छान्दसाः स्युस्त्रयोऽग्राद्यद्घच्छा चेति तथा स्मृतेः ॥११७॥

अधिकृत्य भवे छन्दसीति खल्विदमुच्यते ।
कुशाग्राच्छ इतीवार्थे कुशाग्रीयं विशेष्यवत् ॥ ११८ ॥

अग्रे हायनमस्या इत्यर्थे स्यादाग्रहायणी ।
प्रज्ञाद्यणा पूर्वपदात्संज्ञायामिति णत्वतः ॥ ११९ ॥

मासे सास्मिन् पौर्णमासीत्याग्रहाणि....[हायणिको मतः]।
ठक्प्रत्ययादाग्रहायण्यश्वत्थाट्ठगिति स्मृतात् ॥ १२० ॥

१. Pā. V-iii-78.
२. Pā. V-iii-80.
३. Pā. V-iii-83.
४. Pā. V-iii-103.
५. Pā. IV-iv-116.
६. Pā. IV-iv-117.
७. Pā. IV-iv-110.
८. Pā. V-iii-105.
९. Pā. VIII-iv-3.
१०. Pā. IV-ii-21.
११. Pā. IV-iii-22

देयर्णेत्यौग्रहायण्यां प्रत्यये वुञि ठञ्यपि ।
आग्रहायणकं प्रोक्तमाग्रहायणिकं तथा ॥ १२१ ॥

अग्रेवणं वनस्याग्र इत्यर्थे परिकीर्तितम् ।
णत्वं भवेदत्र वनं पुरगामिश्रसूत्रतः ॥ १२२ ॥

सप्तम्यलुग्राजदन्तादिष्वेतस्य निपातनात् ।
नयतेः क्विपि णत्वोक्तिरग्रणीर्ग्रामणीरिव ॥ १२३ ॥

आद्यादित्वादग्रतः स्यादग्रशब्दात्तसिर्यदि ।
पुरोऽग्रतोऽग्रेषु सर्तेरिति टेरग्रतस्सरः ॥ १२४ ॥

एदन्तताग्रशब्दस्य सूत्रेऽत्रैव निपात्यते ।
अग्रेसरोऽपि तेन स्याच्चिन्त्यस्त्वग्रसरः क्वचित् ॥१२५॥

अग्रे भोजं व्रजत्यग्रे भुङ्क्त्वा[भुक्त्वा] व्रजति वेति दिक् ।
क्त्वा णमुल् च विभाषाग्रेप्रथमेत्यादिनात्र वा ॥१२६॥

वज्रं हीरकदम्भोलिवालुकामलकेषु च ।
वज्रा तु स्याद्गुडूच्यां स्त्री विप्रः पुंसि द्विजे स्मृतः ॥

वज्रं वने च पुण्ये च चुब्रं तु वदने स्मृतम् ।
क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे ॥ १२८ ॥

खुरः पुमान् कोलदले शफे च परिकीर्तितः ।
खुरणा स्यात्खुरणसी नासिकान्तस्य वा नसि ॥१२९॥

बहुव्रीहेरिह खुरखराभ्यां वेति वार्तिकात् ।
पक्षे त्वत्राङ्नसादेशाविति द्वैरूप्यसङ्गतिः ॥ १३० ॥

१. Pā. IV-iii-47.
२. Pā. VIII-iv-4.
३. Pā. III-ii-18.
४. Pā. III-iv-24.
५. Pā. VIII-iv-3.

भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे ।
भद्रो रुद्रे वृषे ताम्रचूडे मरुकदम्बके ॥ १३१ ॥

हस्तिजात्यन्तरे चैव वाच्यवच्छ्रेष्ठसाधुनोः ।
भद्रा मन्दाकिनी रास्नाकृष्णानन्तानकट्फले ॥ १३२ ॥

भद्रंकरणमित्युष्णभद्रयोः करणे मुमि ।
भद्राकृतो डाचि मद्राकृतवन्मुण्डिते स्मृतः ॥ १३३ ॥

शूद्रायां क्षत्रजः शंसुश्चोग्रो घोरे त्वयं त्रिषु ।
उग्रं यथा तथा पश्यन्नुग्रंपश्यो दृशेः खशि ॥ १३४ ॥

भेरः स्यात्कातरे पुंसि भेरी स्याद्दुन्दुभौ स्त्रियाम् ।
भेळः प्लवे भीरुके च निर्बुद्धिमलि[मुनि]भेदयोः ॥१३५॥

शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् ।
शुक्रोऽस्य देवतेत्यर्थे स्याच्छौक्राद्भनि शुक्रियम् ॥१३६॥

योगान्तरे सिते शुक्रः क्लीबं रेतोऽक्षिरुच्छिदोः[रुग्भिदोः]।
शुद्धद्रव्येऽपि रजते कैश्चिदेतन्निगद्यते ॥ १३७ ॥

गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत् ।
गौरं तु विशदे पद्मकेसरे सितसर्षपे ॥ १३८ ॥

गौरश्शशिनि गौरी तु नग्नकन्योमयोर्मता ।
रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च ॥ १३९ ॥

नदीभेदे च गौरी स्याद्वरुणस्य च योषिति ।
षिद्गौरादिभ्यश्चसूत्रात् स्त्रीत्वे ङीषीह दर्शितः ॥१४०॥

१. Both the mss. omit भद्रं ... कट्फले. The verses have been inserted on the basis of lexicons.

२. Vā. VI-iii-70.

३. Pā. IV-ii-26.

४. Pā. IV-i-41.

वत्रस्त्रिषु विभक्तौ स्यादिरा भूवाक्सुराम्बुषु ।
इरावान् सागरस्तत्र भवे त्वैरावतः स्मृतः ॥ १४१ ॥

पृषोदरादिणत्वे स्यात्तस्मिन्नैरावणोऽपि च ।
इरावतो घनस्येयमित्यण्यैरावती तडित् ॥ १४२ ॥

ऐरावतं धन्व धन्वयोपधाद्वुञ् ततो यदि ।
स्यादैरावतकं धन्व क्लीबं भाष्यप्रयोगतः ॥ १४३ ॥

इरस्मादस्तु वज्राम्नावुभ्रंपैश्येति शासनात् ।
मालमुन्नतभूमीलापङ्क्तौ पुष्पादिदामनि ॥ १४४ ॥

मणिमाला त्वसौ हारे स्त्रीणां दन्तक्षतान्तरे ।
तूलभारेष्टकेषीकामालानामिति शासनात् ॥ १४५ ॥

पूर्वे सत्युत्तरपदाधिकारोक्तादुदाहृतम् ।
वुञ्[वुञि] प्रस्थपुरेत्यादेर्मालाप्रस्थक उच्यते ॥ १४६ ॥

तीव्रमत्युष्णकटुकनितान्तेष्वन्यवत्स्मृतम् ।
तीव्रा च कटुरोहिण्यां दूर्वायामपि दृश्यते ॥ १४७ ॥

जन्यवत्वेन दीर्घेण ठना बाहुलकादिह ।
निशातनार्थकतिजेस्तीव्रशब्दोऽवगम्यताम् ॥ १४८ ॥

**समि कस उकन्॥२-३१॥** दुर्जनास्थिरयोर्मालाकारे संकसुकः स्मृतः ॥

**पचिनश्योर्णुकन्कनुमौ च ॥ २-३२ ॥** पाकुकः पाचके द्वक्यौ[१]नश्वः क्योस्तु[नशेः कनुमि]नंशुकः ॥

**भियः क्रुकन् ॥ २-३३ ॥** भीरुकस्तु प्रकथितः कातरे वाच्यलिङ्गकः ॥

**क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ २-३४ ॥** क्वुन्नित्यत्र प्रकरणे प्रत्ययः शिल्पिसंज्ञयोः ॥ १५० ॥

१. Pā. IV-ii-121.
२. Pā. III-ii-37.
३. Pā. VI-iii-65.
४. Pā. IV-ii-122.

धातोरुपपदे सत्यप्यसत्यपि विधीयते ।
निर्णेजके शुके चापि रजकः परिकीर्तितः ॥ १५१ ॥

इक्षुखण्डनकर्ता तु शिल्पी स्यादिक्षुकुट्टकः ।
चरकः स्यान्मद्यपात्रे मद्यतत्पानयोरपि ॥ १५२ ॥
जनकः पितरि क्ष्मापे चषकः पानभाजने ।
शुनको भषकश्चेति कथ्येते द्वाविमौ शुनि ॥
यथोदाहरणं योज्या एवमन्येऽपि सूरिभिः ॥ १५३ ॥

**रमे रश्च लो वा ॥२-३५॥** रमको लमकश्चेति ख्यातावेतौ विलासिनि ॥

**जहातेर्द्वे च ॥ २-३६ ॥** त्यागैकशीले जहकः काले च परिकीर्तितः ॥ १५४ ॥

**ध्मो धमश्च ॥ २-३७ ॥** धमकः स्वर्णकारे च व्याधौ मृत्यौ च कथ्यते ॥

**हनो वध च ॥२-३८॥** वधको वाच्यवल्लिङ्गो मारके कथितो बुधैः ॥ १५५ ॥

**बहुलमन्यत्रापि ॥ २-३९ ॥** पृथक्सूत्रस्य बहुलमन्यत्रापीति दर्शनात् ।
अन्यत्र शिल्पिसंज्ञाभ्यामपि क्वुन्नवधार्यते ॥ १५६ ॥

विस्मापके तु कुहकः कृतकश्छेत्तृवाचकः ।
एवमाद्या बुधैरन्येऽप्यूह्यास्तत्तत्प्रयोगतः ॥ १५७ ॥

**कृषेर्वृद्धिश्चोदीचाम् ॥ २-४० ॥** कृषीवले कार्षकः स्यात्कृषकोऽप्यभिधेयवत् ।
यदा तु कृषकः फालवाची पुंसि तदा स्मृतः॥ १५८ ॥

**उदकं च ॥ २-४१ ॥** प्रपञ्चार्थम् । केचिच्चकारं न पठन्ति ॥

उदकं सलिले क्लीबं क्वुन्प्रपञ्चोऽयमीरितः ।
उदन्शस्प्रभृतिष्वस्य पद्दन्निति[1] विकल्प्यते ॥ १५९ ॥

संज्ञायामुदमेघादिरुदकस्योदभावतः[2] ।
क्षीरोदलवणोदादौ स्यादुत्तरपदस्य सः ॥ १६० ॥

1. Pā. VI-i-63. 2 Pā. VI-iii-27.

उद्पेषं पिनष्टीति णमुलन्ते पिषावपि ।
वासवौहनधिष्वेवमुद्वासादयः स्मृताः ॥ १६१ ॥
अत्रोदधिर्घटाद्यर्थः संज्ञामर्णवे भवेत् ।
उदसुक[असंयुक्त]हलादौ तु पूरणीये विकल्पतः॥१६२
अस्मिन् स्यादुदकुम्भश्चोदककुम्भ इति द्विधा ।
स्यात्संयुक्तहलादौ तूदकस्थालीति न द्विधा ॥ १६३ ॥
मन्थौदनसक्तुष्वपि बिन्दावपि वज्रभारहारेषु।
अपि वीवधे च गाहे स्यादुदकस्योदभावो वा ॥१६४॥
तेनोदमन्थ उदकमन्थ इत्यादयः परे ।
गन्था[गाहा]न्तेष्विह शब्देषु शब्दा ऊह्या बुधैर्द्विधा ॥
उदकेन श्वयत्यस्मादुदश्वित्तक्रमुच्यते ।
क्विप्तुकौ श्वयतेरत्र यत्प्राप्तं संप्रसारणम् ॥ १६६ ॥
स्यादेतन्नोदश्वितोऽन्यतरस्यामिति सूत्रतः ।
निपातनादत्र सूत्रे ठका पक्षेऽप्यणा पुनः ॥ १६७ ॥
औदश्वित्कं भवेदौदश्वितमप्यत्र संस्कृतम् ।
सप्तम्यन्तात्प्रत्ययोऽयं संस्कारो लवणादिभिः ॥ १६८ ॥
यस्तु प्राग्वहतीयोऽस्ति संस्कृतार्थे ठगेष तु ।
तृतीयान्तात्तदापि स्यादौदश्वित्क इतीहनात् ॥ १६९ ॥
उदन्या तु पिपासायां क्यजन्तस्य निपातनात् ।
उदक्या त्वृतुमत्यां स्यादुदन्वानुदधौ स्मृतः ॥ १७० ॥

वृश्चिकृषोः किकन् ॥ २-४२ ॥

वृश्चिको राशिभेदेऽपि शूककीटे च कथ्यते ।
कृषिकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत् ॥ १७१ ॥

१. Pā. VI-iii-58.
२. Pā. VI-iii-59.
३. Pā. VI-iii-60.
४. Pā. IV-ii-19.

प्राङि पणिकषः ॥ २-४३ ॥ आगन्तुके प्रापणिकः पण्यविक्रयणि त्रिषु ।
मालाकारे प्राकषिकः परदारोपजीविनि ॥ १७२ ॥

मुषेर्दीर्घश्च ॥ २-४४ ॥ आखौ ना मूषिकः प्रोक्तो मूषिकाजादिटाब्वशात् ॥

स्यमेः संप्रसारणं च ॥ २-४५ ॥ सीमिकस्तरुभेदेऽपि वल्मीकेऽपि च कथ्यते ॥ १७३ ॥

क्रिय इकन् ॥ २-४६ ॥ क्रेतरि क्रयिको वाच्यलिङ्गकः परिकीर्तितः ।

आङि पणिपनिपतिखनिभ्यश्च ॥ २-४७ ॥ वणिजः[वणिजि] स्यादापणिकोऽर्धरात्रेन्द्रनीलयोः॥१७४
स्तावकेऽप्यापनिक इत्युच्यते सूक्ष्मदर्शिभिः ।
श्येने च दैवायते च कालेऽप्यापतिकः स्मृतः ॥१७५॥
भवेदाखनिको व्याधौ वराहे मूषिकेऽपि च ॥

श्यास्त्याहृञविभ्य इनच् ॥ २-४८ ॥ चत्वारो धातवः ॥
पाण्डरे पत्रिणि श्येनो वर्णः सास्यां क्रियेति ञे ॥१७६॥
श्यैनंपातेति मृगयावाची स्त्रीलिङ्ग उच्यते ।
मुमि श्येनैतिलस्येति स्त्येनश्चोरे यकारवान् ॥ १७७ ॥
यकाररहितं धातुं वदद्भिर्माधवादिभिः ।
उक्तस्तदर्थ एवासौ सिद्धिश्चौरादिकादचि ॥ १७८ ॥
हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् ।
हरिणी हरितायां च नारीभिद्वृत्तभेदयोः ॥ १७९ ॥
सुवर्णप्रतिमायां च शक्या पक्षिणि चाविनः ॥

वृजेः किच्च ॥ २-४९ ॥ वृजिनं कल्मषे क्लीबं क्लिन्ने[केशे] ना कुटिलेऽन्यवत् ॥

अजेरजि च ॥ २-५० ॥ न द्वयोश्चर्मणि बुधैरजिनं परिकीर्तितम् ॥

बहुलमन्यत्रापि ॥ २-५१ ॥ अत्रत्यसूत्राद्बहुलमन्यत्रापीति दर्शितात् ॥ १८१ ॥
ईदृक्प्रकाराः कठिनमलिनाद्याः प्रसाधिताः ।
तथा हि कठिनं क्रूरे स्तब्धे त्रिष्वथ न द्वयोः ॥

१. Pā. IV-ii-58. २. Pā. VI-iii-71.

स्थाल्यां कठिनिकायान्तु कठिनी कठिना सिता ।
मलिनं दूषिते कृष्णे ऋतुमत्यां च योषिति ॥ १८३ ॥

ज्योत्स्नातमिस्रवि[स्रेति] मलान्मत्वर्थीयो निरूपितः ।
नलिनी पद्मिनीपद्मव्योमसिन्धुसरोवरे ॥ १८४ ॥

नलिकायां च कथिता नलिनं कमले जले ।
कुण्डिनं नगरे क्लीबं कुण्डिनस्तापसे पुमान् ॥ १८५ ॥

दिनं तु दिवसे क्लीबं खण्डिते त्रिष्वितीह दिक् ॥
द्रविणं न द्वयोर्द्वित्वे[योर्वित्ते] काञ्चने च पराक्रमे ॥१८६

द्रुदक्षिभ्यामिनन् ॥ २-५२ ॥

पक्षेण[दक्षिणः] सरलोदारपरच्छन्दानुवर्तिषु ।
वाच्यवद्दक्षिणा वाचि यज्ञदानप्रतिष्ठयोः ॥ १८७ ॥

व्यवस्थायामसंज्ञायां या प्राप्ता गणपाठतः ।
स्याद्दक्षिणस्य सा सर्वनामसंज्ञापि वा जसि ॥ १८८ ॥

ङसिङ्योः स्मास्मिनौ चास्मात्परयोर्वा स्थितं हि तत् ।
दक्षिणार्हे दक्षिणीयदक्षिण्यौ छयतोस्त्रिषु ॥ १८९ ॥

भवेद्दक्षिणतोऽस्तातिविषयादतसुच्यतः ।
स्यादुत्तराधरेत्यादौ दक्षिणादिति चाव्ययम् ॥ १९० ॥

एनप्यसमीदपञ्चम्या दक्षिणेनेत्यदूरके ।
अपञ्चम्या एव कृते दक्षिणादाचि दक्षिणा ॥ १९१ ॥

दूरेऽस्माद्धनराह्याचो दक्षिणाहि च दक्षिणा ।
दाक्षिणात्यः शैषिके त्यक्याजन्तात् त्रिष्वतो भवेत् ॥

१. Pā. V-ii-114.
२. Pā. I-1-34.
३. Pā. V-iii-34.
४. Pā. V-iii-35
५. Pā. V-iii-36.
६. Pā. V-iii-37.

वा तारभावकथनाद्दिक्शब्देभ्यः परस्य तीरस्य ।
दक्षिणतीरं दक्षिणतारमिति द्वैधमुच्यते रूपम् ॥१९३॥

समास इह दिङ्नामान्यन्तराल इति स्मृतेः ।
भवेद्दक्षिणपूर्वा स्त्री सर्वनामत्वमत्र वा ॥ १९४ ॥

**अर्तेः किदिच्च** ॥ २-५३ ॥ इरिणं तु स्मृतं शून्येऽप्यूषरेऽप्येतदुच्यते ॥

**वेपितुह्योर्ह्रस्वश्च** ॥ २-५४ ॥ विपिनं तु वने क्लीबं तुहिनं तिमिरे हिमे ॥ १९५ ॥

**तलिपुलिभ्यां च** ॥ २-५५ ॥ तलिनं विरले स्तोके स्यात्तुच्छे[स्यात्स्वच्छे]ऽप्यभिधेयवत् ।
पुलिनं तु बुधैः प्रोक्तं न द्वयोः सिकतोच्चये ॥ १९६ ॥

**गर्वेरत उच्च** ॥ २-५६ ॥ गुर्विण्यापन्नसत्त्वायां गौरादित्वेन ङीषिह ॥

**रुहेश्च** ॥ २-५७ ॥ रोहिणीति स्त्रियामुक्तश्शब्दो गोवाचको बुधैः ॥१९७॥

**महेरिनण् च** ॥ २-५८ ॥ माहिनो वाच्यवत्पूज्ये वाच्ये[राज्ये] तु स्यान्नपुंसकम् ।
इनण् चेति चकारेण महिनं चेति हीष्यते ॥ १९८ ॥

**क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च** ॥ २-५९ ॥ वाग्वाण्यां व्याहृतार्थायां त्वस्यां स्याट्ठकि वाचिकम् ।
प्रशंसायां भूम्नि वा स्याद्वाग्मी वाचो ग्मिनौ सिति ॥

वाचामपि[वाचालोऽपि]च वाचाटः कुत्सायां बहुभाषिणि ।
वागेव वाचा यदि टाबस्माद्वागुरिदर्शने ॥ २०० ॥

लातेरस्मिन् कर्मणि के वाचालः स्यादकुत्सने ।
एकाचो नित्यमिति चेन्मयड्वाङ्मय उच्यते ॥ २०१ ॥

त्वङ्मयाद्या एवमेव द्रष्टव्याः सूक्ष्मदर्शिभिः ।
मनुष्यनामतष्ठचेद्वागाशीर्दत्तशब्दतः ॥ २०२ ॥

१. Verses 193-198a are written in B after 213
२. Pā. II-ii-26.
३. Pā. V-ii-124.
४. Vā. IV-iii-144

एकाक्षरप्राक्पदानामुदक्पदविलोपतः ।
वाचिकोऽत्रानुकम्पायां नीतौ चेत्यत्र दर्शितः ॥ २०३ ॥

वाचोयुक्तिस्तु षष्ठ्याश्च वाग्दिक्पश्यद्भ्य इत्यलुक् ।
वाचंयमो वाचियमो व्रत इत्युक्तखच्वशात् ॥ २०४ ॥

निपातनादमन्तत्वं वाग्यमस्त्वव्रते भवेत् ।
वाच्यवत्पृच्छतेः प्राट् स्यात् च्छ्वोः शूडिति शकारवान् ॥

एतत्पूर्वो विवाकस्तु नीत्यनीतिविचारके ।
श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे ॥ २०६ ॥

लक्ष्मीत्रिवर्गसंपत्तिविधोपकरणेषु च ।
विभूतौ च मतौ च स्त्री श्रीलं तद्वति वाच्यवत् ॥२०७॥

श्रीलः कपिलकादित्वात् सेनायमुदीरितः[?] ।
खश्प्रत्यये त्वात्ममाने खश्चेत्यस्मिन् मनःकृते ॥ २०८ ॥

ईच एकाचोऽम्प्रत्ययवच्चेत्यस्याप्रवर्तनाद्भाष्ये ।
ह्रस्वे सति श्रिमन्यं मुमोऽप्यभावेन वर्णयन्ति बुधाः ॥

माल्लूरे श्रीफलः पुंसि स्रुस्तु स्याद्यज्ञसाधने ।
द्रूः सुवर्णे कामरूपिण्यपि विद्वद्भिरुच्यते ॥ २१० ॥

कटप्रूः कीटके घूके कामरूपिण्यपि स्मृतः ।
जूराकाशे सरस्वत्यां पिशाचे जवने स्त्रियाम् ॥ २११ ॥

**आप्नोतेर्ह्रस्वश्च ॥२-६०॥** अप्शब्दस्तु पकारान्तः स्त्रियां भूम्नि जलार्थकः ।
एकाचो मयटा नित्यमब्विकारेऽम्मयं स्मृतम् ॥ २१२ ॥

१. Pā. V-iii-76.
२. Pā V-iii-77.
३. Vā. VI-iii-21.
४. Pā. III-ii-40.
५. Pā. VI-iv-19.
६. Pā. III-ii-83.
७. Pā. VI-iii-68.

आप्यं तु शैषिकाणान्तात्स्वार्थे ष्यञि विदुर्बुधाः ।
समासे विमलापादावृक्पूःसूत्राददन्तता ॥ २१३ ॥

द्वीपान्तरीपे द्वे स्यातामन्तर्वारि स्थिते तटे ।
प्रतीपं प्रतिकूले स्यात्समीपं निकटे स्मृतम् ॥ २१४ ॥

ईकारस्य द्व्यन्तरुपसर्गेभ्योऽप ईत् इति स्मृतेः ।
द्वीपादनुसमुद्रं यञिति सूत्रेण शैषिके ॥ २१५ ॥

यञि द्वीपे भवं द्वैप्यं स्त्रियां द्वैप्या निगद्यते ।
यञश्चेति न ङीबस्मादपत्यग्रहणं कृतम् ॥ २१६ ॥

द्वीपो नानुसमुद्रं यस्तस्मात्तु द्वैपमुच्यते ।
कच्छादिभ्यश्चेत्यणुक्तेर्मनुष्ये द्वैपिकः स्मृतः ॥ २१७ ॥

तत्स्थे च वुञ्विधानेन मनुष्येत्यादिसूत्रतः ।
अन्वीतमनुकूले स्यात्प्राग्वदीकारशासनात् ॥ २१८ ॥

प्रतीपं वर्ततेऽन्वीपं वर्तते चेति विग्रहे ।
द्वितीयान्ताट्ठका तत्प्रत्यनुपूर्वमिति स्मृतेः ॥ २१९ ॥

क्रियाविशेषणात्प्रातीपिकश्चान्वीपिकस्तथा ।
अवर्णान्तोपसर्गात्तु विकल्पेनेत्वशासनात् ॥ २२० ॥

प्रेपं प्रापं परेपं च परापमिति चेह दिक् ।
ऊदनोर्देश इत्येवमूकारस्य विधानतः ॥ २२१ ॥

जलप्रायप्रदेशे स्यादनूपं वाच्यलिङ्गकम् ।
अदेशत्वेन नान्वीपे स्याद्दत्वं प्राङ्निरूपिते ॥ २२२ ॥

१. Pā. V-iv-74.
२. Pā. VI-iii-97.
३. Pā. IV-iii-10.
४. Pā. IV-i-16.
५. Pā. IV-i-13.
६. Pā. IV-ii-133.
७. Pā. IV-ii-134.
८. Pā. IV-iv-28.
९. Pā. VI-iii-98.

अपो नपादित्यपांनपादित्यपि च देवते ।
अपोनप्त्रीयमित्येतदपांनप्त्रीयमित्यपि । ॥ २२३ ॥

आभ्यां क्रमादपोनप्त्रपांनप्तृभ्यां घ ईत्यतः ।
घनं[वे सं]नियोगशिष्टोन्-रूपाभ्यां देवतायके[तार्थके] ॥

उत्पत्तिरप्सु यस्यासावप्सुयोनिरुदाहृतः ।
अप्सव्यस्त्रिष्वप्सु भवे मन्त्रभेदेऽप्सुमान् स्मृतः ॥२२५

अप्सुयोन्याद्यैपोयोनियन्मतुष्य[तुष्वि]त्यलुग्विधेः ॥

परौ व्रजेः षश्च पदान्ते ॥ २-६१ ॥

क्विब्दीर्घयोः प्रकृतयोः षः पदान्ते परौ व्रजेः ॥ २२६ ॥
परित्यज्य व्रजन् सर्वं परिव्राट् तेन मस्करी ।
अपदान्ते तु जान्तोऽयमिति ज्ञातो हि धातुतः ॥२२७

हुवः श्लुवच्च ॥ २-६२ ॥

जुहूर्यज्ञोपकरणे स्त्रियां विद्वद्भिरुच्यते ।

स्रुवः कः ॥ २-६३ ॥

स्रुवः पुंस्ययमप्युक्तस्तस्मिन्नेव विचक्षणैः ॥ २२८ ॥

चिक् च ॥ २-६४ ॥

स्त्रीलिङ्गः स्रुक् चकारान्तो होमाङ्गे च गतौ स्मृतः ।

तनोतेरनश्च वः ॥ २-६१ ॥

त्वक्शब्दस्तु स्त्रियां धीरैः प्रोक्तो भूरुहवल्कले ॥ २२९ ॥
इन्द्रियेऽसृग्धरायां च धान्याद्याच्छादिचर्मणि ।
हलदन्तात्तु सप्तम्यास्संज्ञायामलुगीरणात् ॥ २३० ॥

त्वचिसारः क्वचित्संज्ञा नेति त्वक्सार इत्यपि ।

ग्लानुदिभ्यां डौ ॥ २-६६ ॥

ग्लातेर्डौग्लौः स्त्रियां कद्रूः काले च परिकीर्तिता ॥२३१॥
ग्लावंमन्यः खशि सत्यावादेशेनमन्यतेरस्मिन् ।
ईच एकाचोऽम्प्रत्ययवच्चेत्यमि सति सुबम्यतिदेशे ॥

रायंमन्यादिकेऽप्येवं तत्तदादेशयोजनौ ।
नावा तार्ये तु नाव्यं स्यान्नौवयोधर्मसूत्रतः ॥ २३३ ॥

१. Pā. IV-ii-27.
२. Vā. VI iii-18.
Pā. VI-iii-9.
५. Both the manuscripts here add नावा तार्यं इत्यादि
६. Pā. IV-iv-91.

वीन्तो यि प्रत्यय इति ह्यावादेशोऽत्र शिष्यते ।
नावा तरति यस्तत्र नौ द्व्यचष्ठंनि नाविकः ॥ २३४ ॥

स्त्रियां तु नाविका नात्र यदीकारः प्रवर्तते ।
द्विगोरतद्धितलुकि नौशब्दान्ताब्बजीरणात् [?] ॥२३५॥

द्वाभ्यां नौभ्यामागते द्विनावरूप्यं हि कथ्यते ।
द्विगोर्लुगिति[3] सूत्रेऽचीत्यपकर्षान्न रूप्यलुक् ॥ २३६॥

पञ्चनावप्रियेत्येवं स्यादुत्तरपदे द्विगौ ।
स्याद्द्विनावत्रिनावादौ समाहारद्विगावपि ॥ २३७ ॥

अर्धनावं तु नावार्धे स्यादर्धाच्चेति टज्विधिः ।
पञ्चनौ पञ्चभिर्नौभिः श्रिते तद्धितलुग्वशात् ॥ २३८ ॥

स्यादेकवचनान्तोऽयंमुरःप्रभृतिषु श्रितः ।
बहुव्रीहेर्वा द्विबहुवचनान्तावतोऽत्र कप् ॥ २३९ ॥

**च्विरव्ययम्** ॥ २-६७ ॥ च्विरव्ययमितीहोक्तं नियमार्थगिरा मुनेः ।
एजन्तानामुणादीनां नाव्ययत्वं च्विमन्तरा ॥ २४० ॥

**रातेर्डैः** ॥ २-६८ ॥ रैशब्दस्तु द्वयोर्वित्ते हलादावात्मभाक् पुंसि ॥

**गमेर्डोः** ॥ २-६९ ॥ गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः ॥ २४१ ॥

स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ।
स्वस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥ २४२ ॥

सर्वत्र गोरजादीनां प्रसङ्गे यद्विधीयते ।
तेन स्यात्तदपत्यादि गव्यं यच्च गवे हितम् ॥ २४३ ॥

गोर्विकारश्च गव्यं तत् तत्तदर्थे यदुक्तितः ।
वान्तो यि प्रत्यय इति वान्तादेशो विचिन्त्यताम् ॥

१. Pā. VI-i-79.
२. Pā. IV-iv-7.
३. Pā. IV-i-88.
४. Pā. V-iv-100.
५. Pā. V-iv-151.
६. Pā. VI-i-79.

पुरीषे गोमयं गोश्च[१] पुरीष इति शासनात् ।
गव्या गोत्रा गवां बृन्दे यत्रयोरनुशासनात् ॥ २४५ ॥

गौपुच्छिकस्तु तरति गोपुच्छेनेति ठग्विधेः ।
गौपुच्छिकः प्राग्द्वितीये ठञोर्हीयार्थवाच्यपि ॥ २४६ ॥

असङ्ख्यापरिमाणाश्वादेर्गोर्यत्प्रत्ययस्मृतेः ।
संयोगोत्पादयोर्गव्यः[?] कथितो गोनिमित्तयोः ॥२४७॥

गोः प्रत्यर्पणपर्यन्तमागवीनः परार्थकृत् ।
भवेदनुगरीको[?] गौः पश्चात्पर्याप्तगन्तरि ॥ २४८ ॥

कप्रत्ययान्ते स्थाधातौ गोष्ठं गोस्थानके स्मृतम् ।
षत्वं त्वम्बाम्बगोभूमिसव्यापद्व्यादिसूत्रतः ॥ २४९ ॥

भूतपूर्वे तु गोष्ठे स्याद्गोष्ठीनमिति खञ्वशात् ।
हैयङ्गवीनं संज्ञायां ह्योगोदोहविकारके ॥ २५० ॥

तदाशितं गवीनं स्याद्गावो यत्र पुराशिताः ।
अषडक्षेति सूत्रेण खप्रत्ययविधौ सति ॥ २५१ ॥

उपसर्जनगोशब्दान्तस्य ह्रस्वेन चित्रगुः ।
एवमेवोपगुस्तस्यापत्येऽप्यौपगवस्त्रिपु ॥ २५२ ॥

गोत्रेऽप्येवं युवापत्ये स्यादौपगविरिञ्वशात् ।
पञ्च गावः प्रिया यस्य स स्यात्पञ्चगवप्रियः ॥ २५३ ॥

टचो गोऽन्तात्तत्पुरुषादतद्धितलुकि स्मृतेः ।
द्वन्द्वतत्पुरुषौ नित्यौ यदुत्तरपदे स्मृतौ ॥ २५४ ॥

त्रिपदेऽस्मिन् तत्पुरुषो बहुव्रीहौ न पाक्षिकः ।
समाहारस्तु पञ्चानां गवां पञ्चगवं स्मृतम् ॥ २५५ ॥

१. Pā. IV-iii-145.
२. Pā. VII-iii-97.
३. Pā. V-ii-18.
४. Pā. V-ii-23.
५. Pā. V-iv-7.

द्विग्वर्थे हि समाहार एकवत्वान्नपुंसकम् ।
क्रीते तु पञ्चभिर्गोभिः पञ्चभिर्वाच्यवद्भवेत् ॥ २५६ ॥

आर्हीयेऽस्य लुका नात्र समासान्तणिजाश्रयः ।
द्वन्द्वे दाराश्च गावश्चेत्यचि दारगवं स्मृतम् ॥ २५७ ॥

तिष्ठन्ति गावो यस्मिन् स कालः तिष्ठद्गु कथ्यते ।
आयान्ति गावो यस्मिन् स कालः स्यादायतीगवम् ॥

तिष्ठद्गुप्रभृतित्वेन[१] स्मृते क्लीबेऽव्यये इमे ।
आयते स्यादनुगवं क्लीबाव्ययमिदं तथा ॥ २५९ ॥

गोः पदान्तस्य सर्वत्र[२] विभाषा गोरिति ह्यति ।
गोअग्रं प्रकृतित्वेन गोऽग्रं स्यात्पूर्वरूपतः ॥ २६० ॥

अवङ्स्फोटायनस्येति[३] वाचि गोरवङीदृशः ।
गवाग्रमपि तेन स्याद्विभाषेयं व्यवस्थिता ॥ २६१ ॥

गवाक्षशब्दे तेनावङ् नित्य एव प्रवर्तते ।
गवेन्द्र इति नित्योऽवङिन्द्रे चेति[४] विधानतः ॥२६२ ॥

गोविन्दश्शास्यसंज्ञायां उक्ते विन्दे गवादिषु ।
गोनर्द इति देशाख्या गोनर्दीयः पतञ्जलिः ॥ २६३ ॥

एङ् प्राचां देशे[५] इत्यत्र वृद्धत्वाच्छः प्रवर्तते ।
गावश्चाश्वाश्च मिलिता गवाश्वमिति कथ्यते ॥ २६४ ॥

गोअश्वा अपि गोऽश्वाश्च यदा नावङ् भवेत्तदा ।
आवादेशे तु गोर्यूतौ परिमाणेऽध्वनः कृते ॥ २६५ ॥

द्वाभ्यां धनुःसहस्राभ्यां गव्यूतिः पुंसि च स्त्रियाम् ।
मत्वर्थे एकगोपूर्वाट्ठञ्नित्यमिति[६] सूत्रतः ॥ २६६ ॥

१. Pā. II-i-17.
२. Pā. VI-i-122.
३. Pā. VI-i-123.
४. Pā. VI-i-124.
५. Pā. I-i-75.
६. Pā. V-ii-118.

उक्तस्तद्वति धीरैर्गोशतिको गोसहस्रिकः ।
गां मन्य इचै एकाचोऽमित्यमौतोंशसोरिति[2] ॥ २६७॥

धमि[?] द्युतेर्बाहुलकात् द्यौः स्त्री स्वर्गान्तरिक्षयोः ।
द्यांमन्योऽपि च गांमन्य इव खश्यम्विधानतः ॥ २६८ ॥

प्रमेश्च द्रुः ॥ २-७० ॥ भ्रुवोः स्त्रीत्वे लोचनोर्ध्वतिर्यक्प्रसृतरेखयोः ।
धातूत्तरचकारेण त्वग्रगूवग्रगामिनी ॥ २६९ ॥

उवङ्वेतदुवर्णस्य धातोनवयवो[?] नयत् ।
दृक्शस्भ्रूप्रतिपदग्रहणात्तद्विधौ[?] भवेत् ॥ २७० ॥

अस्ति क्विपि गवादीनामूकारोऽङ्गाधिकारजः ।
तथा निर्वर्तिते त्वस्मिन् स्यादेवोवङ्वारितः ॥ २७१ ॥

क्विबाद्र्वानुपपदाद्भमेश्चेदिति चिन्तनम् ।
डूप्रत्ययश्चेदुवङा न बाध इति वार्णयण् ॥ २७२ ॥

अक्षिभ्रुवं समाहारे च तदेत्या[हारेऽचतुरेत्यौ]दिसूत्रतः
ह्रस्वोऽयमुत्तरपद इकोऽह्रस्वोऽङ्य इत्यतः ॥ २७३ ॥

नान्यथायमियङुवेङ् भाविनां च भवेदसौ ।
तस्मान्न श्रमदो ह्रस्वो भ्रूभङ्गेऽपि प्रवर्तते ॥ २७४ ॥

भ्रूकुंसश्च भ्रुकुंसश्च पुंसि स्त्रीवेषधारिणि ।
आकारविधिपक्षेऽस्मिन्नभ्रुकुंसादिर्वार्तिके ॥ २७५ ॥

विद्वद्भिरुक्त एवार्थो भ्रकुंस इति दर्शितः ।
भ्रूकौटिल्ये भ्रूकुटिश्च भ्रुकुटिभ्रकुटिस्तथा ॥ २७६ ॥

१. Pā. VI-iii-68.
२. Pā. VI-i-93.
३. Pā. V-iv-77.
४ Pā. VI-iii-61.
५. Vā. VI-iii-61.
६. Vā. VI-iii-61.

वार्तिकस्यादिशब्देन संगृहीता मनीषिभिः ।
सुभ्रूशब्दादिषु क्विप्चेदप्यङ्गाद्यूविधानतः ॥ २७७ ॥
धातुसंयोगपूर्वत्वाद्दोः सुपिर्न प्रवर्तते ।
न कर्तव्यस्तथा चोवङ्सूत्रे भ्रूशब्दसंग्रहः ॥ २७८ ॥
आगूः स्त्रियां प्रतिज्ञायामग्रगूवदिहोच्यते ॥

**दमेर्डोसिः ॥ २-७१ ॥** भुजे बुधैः प्रकथितो दोः पुंसि च नपुंसके ॥ २७९ ॥
दोषन्नादेश एतस्य शसादिषु विकल्प्यते ।
दोषा तरति यस्सोयं तरतीति ठको विधेः ॥ २८० ॥
औपसंख्यानिके ठस्य कादेशे दौष्क उच्यते ॥

**पणेरिज्यादेश्च वः ॥ २-७२ ॥** वणिक्करणभेदेऽपि वणिज्या वैश्ययोरपि ॥ २८१ ॥
प्रज्ञाद्यणि भवेदस्माद्वाणिजो वैश्यवाचकः ।
वाणिज्यं च वणिज्या च वणिजो भावकर्मणोः ॥२८२॥

**वशः कित् ॥ २-७३ ॥** उशिग्वीरणमूलेऽपि घृतेऽप्यग्नावपीष्यते ॥

**भृजि उच्च ॥ २-७४ ॥** भुरिग्वसुन्धरायां स्त्री पुंसि राजनि कथ्यते ॥ २८३ ॥

**जसिसहोरुरिन् ॥ २-७५ ॥** जसुरिस्तु स्त्रियां श्रान्तौ क्षुधिते त्रिषु ना तमौ ।
सहुरिस्सहने सूर्ये स्वदिव्यामनडुह्यपि[?] ॥ २८४ ॥

**सुयुरुवृञो युच् ॥ २-७६ ॥** सवनं यजने स्नाने सोमनिर्दलनेऽपि च ।
कालचन्द्रमसोः पुंसि तुरुष्के यवनः पुमान् ॥२८५॥
यवनानां लिपिर्या सा यवनानी निगद्यते ।
[[1]रवणः शब्दने प्रोक्तं रवणः कोकिलेऽपि च ॥
वरणस्तिक्तशाकेऽपि प्रकारे वरणं वृतौ ॥]

**अशे रश च ॥ २-७७ ॥** काञ्चीयूपपरिव्याणरज्जुजिह्वाश्वबन्धनीः ॥ २८७ ॥
आहार्यं रशनाशब्दो व्याप्तिभुज्यर्थकाशिजः ।
वक्ष्यमाणात्तु बहुलमन्यत्रापीति सूत्रतः ॥ २८८ ॥

1. This and the next line are missing in the mss. They have been inserted on the basis of other works.

स्यात्काञ्चिजिह्वयोश्शब्दास्वादनार्थरसे रसौ ।
तथा च काञ्चीजिह्वार्थौ दन्त्यतालव्यभेदतः ॥ २८९ ॥

द्वेधापि रशनाशब्दः साधितोऽत्र मनीषिभिः ॥

**उन्देर्नलोपश्च ॥२-७८॥** ओदनं न स्त्रियां भक्ते बलायामोदने स्त्रियाम् ॥२९०॥

नियतं[नियुक्तं] दीयतेऽस्मै तदित्यौदनिकमुच्यते ।
यतः प्राग्वहतीयेषु श्रोणामांसौदनाट्टिठन् ॥ २९१ ॥

ठिड्ढाणञित्यादिङीपि पित्त्वादौदनिकी स्त्रियाम् ।
संभूतविगृहीतार्थौ मांसौदनपरिग्रहः ॥ २९२ ॥

तथा च मांसौदनिकः स्यान्मांसौदनिकी स्त्रियाम् ।
एवं मांसिकमांसिक्यौ विज्ञेये मांसशब्दतः ॥ २९३ ॥

**गमेर्गश्च ॥ २-७९ ॥** गगनं तु बुधैरुक्तं न द्वयोस्सुरवर्त्मनि ॥

**बहुलमन्यत्रापि ॥ २-८० ॥**

सूत्रं बहुलमन्यत्रापीत्युक्तं येन तद्वशात् ॥ २९४ ॥

स्यन्दनं रोचन इति प्रमुखाः केऽपि साधिताः ।
स्यन्दनं तु स्रुतौ नीरे तिनिशे नारयेऽस्त्रियाम् ॥२९५॥

रोचना रक्तकल्हारे गोपित्तवरयोषितोः ।
रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचने त्रिषु ॥ २९६ ॥

चन्दनं स्यान्मलयजे भद्रकाल्यां च न द्वयोः ।
चन्दनः कपिभेदे स्यान्नदीभेदेऽपि चन्दनी ॥ २९७ ॥

आसनं क्षिपणे क्लीबं पुंसि स्याज्जीवकद्रुमे ।
राजातनः क्षीरिकायां प्रियालौ किंशुकेऽपि च ॥२९८॥

अत सातत्यगमन इत्यतो राजपूर्वकात् ।
युचि राजातनस्सिद्ध इत्थमेवान्यदूह्यताम् ॥ २९९ ॥

१. Pā. IV-iv-67.　　२. Pā. IV-i-15.

**रञ्जेः क्युन् ॥२-८१॥** रागे कुसुम्भादिभवे रजनं परिकीर्त्यते ।
रजनी नीलिकारासाहरिद्रायामिनीषु च ॥ ३०० ॥

क्युन्प्रत्यये बाहुलकाल्लत्वाभावे च कल्पते ।
सिद्धः कृपणशब्दोऽयमतिशोच्ये च लोभिनि ॥ ३०१ ॥

**भूसूधूभ्रस्जिभ्यः** चत्वारो धातवः ॥

**छन्दसि ॥ २-८२ ॥** भुवनं विष्टपेऽपि स्यात्सलिले गगने बिले ।
सुवनः स्यात्पुंसि सोमे सूर्याचन्द्रमसोरपि ॥ ३०२ ॥

क्लीबे पुंसुवनं गर्भसंस्कारे परिकीर्तितम् ।
धुवनस्तु स्मृतो वह्नौ धूपेऽपि परिकीर्तितः ॥ ३०३ ॥

उक्तं निधुवनं क्लीबे ग्राम्यधर्मे विचक्षणैः ।
भृज्जनं स्यादम्बरीषे छान्दसा भुवकादयः ॥ ३०४ ॥

बहुलोक्त्या क्वचिल्लोकेऽप्यमीषामस्ति संभवः ॥

**कृपॄवृजिमन्दिनि-** निपूर्वो दधातिः । तथा च पञ्च धातवः ॥

**धाञ्भ्यः क्युः ॥२-८३॥** मयूखे किरणः पुंसि पूरणः सागरे पुमान् ॥ ३०५ ॥

वृजिनं स्यादन्तरिक्षे मन्दनं न द्वयोः स्तुतौ ।
गतौ तु मन्दना नाशे कुले तु निधनं स्मृतम् ॥३०६॥

**धृषेर्धिष च संज्ञायाम् ॥ २-८४ ॥** धिषणो गीष्पतौ पुंसि गौर्यां बुद्धावपि स्त्रियाम् ॥

**वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ २-८५ ॥** चत्वार शब्दा अतिप्रत्ययान्ता निपात्यन्ते । शतृवच्चैषां कार्यम् ॥

पृषन्मृगे स्यात्पुँल्लिङ्गो बिन्दुवाचि तु न द्वयोः ॥३०७॥

न श्वेतबिन्दुके वाच्यलिङ्गकः परिकीर्तितः ।
पृषोदरन्तु पृषत उदरे परिकीर्तितम् ॥ ३०८ ॥

बृहती क्षुद्रवार्ताक्यां कण्टकार्यो च वाचि च ।
वारिधान्यां महत्यां च छन्दोवसनभेदयोः ॥ ३०९ ॥

बृहत्प्रवृद्धे विबुधैः कथितं वाच्यलिङ्गकम् ।
विश्वावसोश्च वीणायां बृहती स्त्री निगद्यते ॥ ३१० ॥

बृहत्कः स्यात्तत्र बृहत्प्रकारो यो विभाव्यते ।
स्थूलादिभ्यः[1] प्रकारार्थे कन्विधावस्य वार्तिकात्[2] ॥ ३११ ॥

आच्छादने बृहतिकेत्येव नित्यं कनो विधेः ।
महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् ॥ ३१२ ॥

तत्त्वभेदे पुमान् श्रेष्ठे विकारेऽपि च वाच्यवत् ।
आत्समानाधिकरणे जातीये चास्य शिष्यते ॥ ३१३ ॥

महादेवादयस्तेन साधनीया विचक्षणैः ।
सन्महत्परमेत्येवं[3] समानस्यानुशासनात् ॥ ३१४ ॥

महाकुलाद्[4] ञ्खञावित्यञ्खञोर्वाचने सति ।
पूर्वसूत्रादन्यतरस्यामित्यस्यानुवर्तनात् ॥ ३१५ ॥

माहाकुलो भवेन्माहाकुलीनश्च तथापरः ।
महाकुलीन एवं च रूपत्रयमिह स्मृतम् ॥ ३१६ ॥

महाजनाय हितमित्यर्थे वार्तिकचोदनात्[5] ।
महाजनात्तत्पुरुषात्स्यान्महाजनिकष्ठञि ॥ ३१७ ॥

चेत्स्यान्महाजनीयस्तु बहुव्रीहेर्महाजनात् ।
कर्मधारयजातीयदेशीये पुंवदुक्तितः ॥ ३१८ ॥

आत्वेन त्वत्र च महाजातीया स्त्री निगद्यते ।
घासे करे विशिष्टे च महस्यपरे[?] सति ॥ ३१९ ॥

१. Pā. V-iv-3.
२. Vā. V-iv-3.
३. Pā. II-i-61.
४. Pā. IV-i-141.
५. Vā. V-i-9.

स्याद्वैय्यधिकरण्येऽपि पुंवद्भावात्त्वयोर्विधिः ।
महाघासो महत्या वा महतो वा तृणे स्मृतः ॥ ३२० ॥
जगत् स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु ।
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥ ३२१ ॥
शिष्टो द्युतिर्गमीति कौ जगदस्त्येतदर्थकः ।
न सर्वनामस्थाने स्यादनुषङ्गोऽस्य नापि ङीप् [स्यादस्य नुं
नापि ङीप् स्त्रियाम् ] ॥ ३२२ ॥
अत्रत्यस्य सूत्रस्य [स्य तु सूत्रोक्त]शतृवद्भावतो भवेत् ॥

**संश्चत्तृपद्वेहत् ॥२-८६॥** चिनोतेः कुहके संश्चदिति संपूर्वकात्स्मृतः ॥ ३२३ ॥
श्चयतेः संश्चदित्येवमाह कश्चिदिह स्थितम् ।
तृपच्छत्रे चन्द्रमसि रूढस्तृप्यति यौगिकः ॥ ३२४ ॥
वेहद्गर्भोपघातिन्यां गवि व्युपपदाद्धनेः ।
जातेस्सरूपाद्गोहत्यो [गोवेहत् ]वाग्वृतु[पोटायुवति]सूत्रतः

**छन्दस्यसानच्** शवसानस्तु मार्गे ना गन्तरि स्यात् त्रिलिङ्गकः ॥
**शुजृभ्याम् ॥ २-८७ ॥** जरसानस्तु कथितः पुंलिङ्गः पुरुषे बुधैः ॥ ३२६ ॥

**ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥ २-८८॥** ऋञ्जसानस्तु बलदे वृद्धसानस्तु पूरुषे ।
मन्दसानस्तु जीवाग्न्योः सहसानो यमे क्रतौ ॥ ३२७ ॥

**अर्तेः गुणश्शुट् च ॥ २-८९ ॥** अर्शसानः कृशानौ ना हिंसितर्यप्ययं त्रिषु ॥

**सम्यानच्स्तवः २-९०॥** संस्तवानस्तु कथितो महिषोद्गातृवाग्मिषु ॥ ३२८ ॥
मन्थानो मन्थदण्डेऽत्र बहुलोक्तेर्निगद्यते ।

**युधिबुधिदृशिभ्यः किच्च ॥ २-९१ ॥** युधानी युद्धनिपुणे युजेः पाठे त्विहाश्रिते ॥ ३२९ ॥
युजानो द्विजसारथ्योर्बुधानः पण्डिते गुरौ ।
दृशानो ज्योतिरादित्यचन्द्रविप्रेषु कीर्तितः ॥ ३३० ॥

1. Vā. III-ii-178. 2. Pā. II-1-65.

**हुर्छैस्सनोलुक् छलोपश्च**जुहुराणोऽग्निचन्द्राश्ववृषकौटिल्यकारिषु ।
**॥२-९२॥**

**श्वितेर्दश्च ॥ २-९३ ॥**

शिश्विदान इति प्राहुः धार्मिके चाप्यधार्मिके ॥३३१॥

कृपेर्बाहुलकादस्मिन् लादेशेऽप्यकृते सति ।
खड्गार्थकः कृपाणोऽसौ प्राचोऽप्यच्छान्दसाविमौ ॥

**तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ २-९४ ॥**

शंस्ता कर्तरि शास्ता स्यादाद्युक्त्या शास्तिरत्र चित् ।
शास्ता समन्तभद्रे ना शासके पुनरन्यवत् ॥ ३३३ ॥

नास्य दीर्घस्सर्वनामस्थाने स्याच्छास्तराविति ।
प्रशास्तुस्तु प्रशास्तारावेसृन्नित्यत्र वर्णनात् ॥ ३३४ ॥

क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ ।
भुजिष्यातनयेऽपि स्यान्नियुक्तेऽपि प्रजापतौ ॥ ३३५ ॥

वैश्यायां शूद्रजः क्षत्तेत्याहुः कोशेषु केषुचित् ।
याज्ञवल्क्यस्तु पूर्वोक्तमेवार्थं बहु मन्यते ॥ ३३६ ॥

आदिशब्देन चोद्गातृप्रतिहर्त्रादयो मताः ॥

**बहुलमन्यत्रापि॥२-९५॥**

प्रपञ्चार्थं बहुलमन्यत्रापीतीह सूत्रितम् ॥ ३३७ ॥

मन्ता हन्तेत्यादयोऽन्ये तदुदाहरणक्षमाः ॥

**नप्तृनेष्टृत्वष्टृहोतृपोतृप्रशास्तृजामातृभ्रातृमातृपितृदुहितृ ॥ २-९६ ॥**

पौत्रदौहित्रयोर्नप्ता तयोः पुत्रेऽपि विश्रुतः ॥ ३३८ ॥

पततेर्नञ्युपपदे करणेऽर्थे निपातितः ।
ऋत्विग्भेदेऽपि नेष्टा स्यान्नयतेष्षुग्गुणाविह ॥ ३३९ ॥

त्वष्टा प्रजापतौ देवशिल्पिन्यपि च शिल्पिनि ।
त्विषेर्दीप्त्यर्थकस्यात्वमप्तृन्सूत्रे निपातनात् ॥ ३४० ॥

जुहोतेश्च पुनातेश्च प्रशास्तेरप्यनुक्रमात् ।
होतृपोतृप्रशास्तारो याजकान्तरवाचकाः ॥ ३४१ ॥

1. Pā. VI-iv-11.

सोदर्ये भ्रातृशब्दोऽयं भ्राजिधातोर्निपातितः ।
व्यत्यस्माद्भ्रातृपुत्रे स्याद् भ्रातृव्यो व्यनि शात्रवे ॥३४२॥

भ्रातुर्व्यच्चेति सूत्रे च छप्रत्ययविधानतः ।
भ्रातृव्य इत्यपि भ्रातृसुतार्थः कथितो बुधैः ॥ ३४३ ॥

वन्दिते भ्रातुरित्येवं समासान्तनिषेधतः ।
उक्ताः प्रशस्ता भ्राता च सुभ्राता चैवमादयः ॥ ३४४ ॥

अन्यत्र पूजनात् कप् चेत् स्युर्मुख्यभ्रातृकादयः ।
मातेर्मानार्थकादन्तर्भावित्य[र्भावित]ण्यर्थशालिनः ॥

जामातृशब्दो जायायां कर्मण्युपपदे कृतः ।
जामाता दुहितुः पत्यौ वल्लभेऽर्के सिते तिले ॥३४६॥

माता तु भुव्यकारादौ ब्राह्मयाद्यासु प्रसूमयोः ।
भ्रातर्यस्या मातुलः स्यादपि धुत्तूरपादपे ॥ ३४७ ॥

मातुलानी मातुली च द्वाविमौ मातुलस्त्रियाम् ।
संख्यासंभद्रपूर्वाया मातुरण्युत्वशासनात् ॥ ३४८ ॥

षाण्मातुरोऽपत्येऽस्याः सांमातुरो भाद्रमातुरः ।
शुभ्रादित्वाड्ढकि कृते वैमात्रेयो विमातृजे ॥ ३४९ ॥

पिता तु जनके पुंसि मातामहपितामहौ ।
मातापित्रोः क्रमात्ताततयोर्मातरि तु क्रमात् ॥ ३५० ॥

मातामहिपितामह्यौ षित्वोक्तेर्ङीषि साधितौ ।
पितृव्यः पितृसोदर्ये भवेतां पितुरागते ॥ ३५१ ॥

पित्र्यं च पैतृकं चास्य देवता पित्र्यमुच्यते ।
वायव्यवद्यदत्रापि स्त्र्यपत्ये दुहिता स्त्रियाम् ॥ ३५२ ॥

१. Pā. IV-1-144.
२. Pā. V-IV-157.
३. Pā. IV-1 115.
४. Pā. IV-1-123.

दौहित्रो दुहितुः पुत्रे बिदाद्येञि निगद्यते।[1]
क्रमान्मानयतेः पातेर्दोग्धेरपि निपातितम् ॥ ३५३ ॥

मातादित्रितयं तत्रावयवर्थोऽपि योज्यताम् ।
अप्तृन्नित्यादिसूत्रे[2] यन्नप्त्रादिग्रहणं कृतम् ॥ ३५४ ॥

तज्ज्ञापयति नोणादितृन्तृचोस्तत्र संग्रहः ।
यद्यप्युद्गातृशब्दोऽत्र शंसादीत्यादिशब्दनात् ॥ ३५५ ॥

साधनीयस्तथाप्यस्य भाष्योक्तेः दीर्घ इष्यते।
व्युत्पत्तिपक्षे नियमस्त्वव्युत्पत्तौ विधिर्यथा ॥ ३५६ ॥

स्यादित्येतत्कृते तत्र नप्त्रादिग्रहणं कृतम् ॥

**सावसेः ऋन् ॥ २-९७ ॥** "सुन्यसेः ऋन्" इति केचित् ॥

स्वसृशब्दः स्त्रियामेष भगिन्यां परिकीर्तितः ॥ ३५७ ॥

स्वस्रीयो भागिनेयः स्यात् स्वसुश्छ[3] इति सूत्रतः ।
मातापित्रोर्भगिन्योस्तु षष्ठ्यालुगलुकोः सतोः ॥ ३५८ ॥

कृते त्वलुकि षत्वस्य विकल्पेन प्रवर्तनात्।
क्रमादेवं स्मृतौ मातृष्वसा अपि पितृष्वसा ॥ ३५९ ॥

मातुष्वसा चापि मातुःस्वसा स्याच्च पितुःस्वसा ।
पितुःस्वसा लुग्लुषोस्तु ढक्छणोरनयोः सुते ॥ ३६० ॥

मातृष्वसेयमातृष्वस्रीयावेवमेव निर्दिष्टौ ।
पैतृष्वसेयपैतृष्वस्रीयावप्यमू विबुधैः ॥ ३६१ ॥

**यतेर्वृद्धिश्च ॥ २-९८ ॥** भ्रातृणां तु मिथो दारा यातरः परिकीर्तिताः।
स्वदितास्वदितत्वाभ्यां वृद्धेर्मतविभेदतः ॥ ३६२ ॥

**नञि च नन्देः ॥२-९९॥** ननान्दा च ननन्दा च भगिन्यां पत्युरिष्यते।
अत्र बाहुलकादेव नलोपो न नखो भवेत् ॥ ३६३ ॥

१. Pā. IV-i-104.
२. Pā. VI-iv-11.
३. Pā. IV-i-143.

न षट्स्वस्रादिभ्य इति ङीब्धातोः[ङीप्टापोः]प्रतिषेधनात्।
स्त्रीत्वेऽप्युक्तेऽप्येषु शब्देष्वेभ्यो ङीब्न कल्पते ॥

दिवेर्ऋः ॥ २-१०० ॥ देवा तु देवरे पुंसि पण्डितैः परिकीर्तितः ॥

नयतेर्डिच्च ॥ २-१०१ ॥ पुरुषे ना पुंसि नारी स्त्री स्त्रियां परिकीर्तिता ॥ ३६५ ॥

ङीन्प्रत्ययान्नृनरयोर्वृद्धिश्चेति प्रकीर्तितात् ।
नृशब्दात्तु नरंमन्यः मन्यतेः खश्यचो विधेः[श्ममोर्विधेः] ॥

सव्ये स्थः छन्दसि ॥ २-१०२ ॥

सव्येष्ठा सारथौ रूपं देवृवत् षस्तु वार्तिकात् ।
सप्तम्यलुक् तत्पुरुषे कृतीति हि परिस्फुटः ॥ ३६७ ॥
सव्येष्ठ इत्याहुरा····मु[हुरन्येऽनु]पसर्गे कमाश्रिताः ॥

अर्तिसृधृधम्यविततृभ्यो निः ॥ २-१०३ ॥

सृस्थाने शृ इति केचित् ॥

अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थदारुणि ॥ ३६८ ॥

सरतेश्च शृणातेश्च पाठभेदादिह स्थितात् ।
सरणिः शरणिश्च द्वे कथिते पङ्क्तिमार्गयोः ॥ ३६९ ॥

तालव्यादिस्तु हिंसार्थेऽप्यस्ति धात्वर्थसौष्ठवात् ।
विश्वंभरायां धरणिः धमेः सूत्रैकगोचरात् ॥ ३७० ॥

सिरायां धमनिर्हट्टविलासिन्यां च योषिति ।
सिद्धादिपाठतस्तद्वान् धर्मशीलः सदीर्घकः ॥ ३७१ ॥

अवनिर्गमने भूम्यामवनिः स्यादथाशनिः ।
स्त्रीपुंसयोश्चञ्चलायां दम्भोलावपि कथ्यते ॥ ३७२ ॥

तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् ।

१. Pā. IV-i-10.
२. Pā. IV-i-5.
३. A gaṇasūtra under Pā. IV-i-73.
४. Vā. VIII-iii-97.
५. Pā. VI-iii-14.

कुमारी लताविशेषः ।

अत्र रञ्जेर्बाहुलकान्नलोपे प्रत्ययेऽप्यसौ ॥ ३७३ ॥

रजनी नलिनीरात्रिपरिव्राजिकासु[रात्रिहरिद्राजतुकासु]च॥

[क्षि]शुषेः सनश्छन्दसि ॥ २-१०४ ॥

शुचेरिति केचित् ॥

छान्दसो मारुते चम्वामाशुशुक्षणिरित्यसौ ॥ ३७४ ॥

षेरादेश्च चः ॥२-१०५॥

आदेश्च धः इति केचित् ॥

जने तु चर्षणिस्सोऽपि छान्दसो न तु लौकिकः ।

[कृषे]रादेश्च घः पाति[घं वक्ति] घर्षणि वर्णयन्निह ॥

[वृ]तेश्च ॥ २-१०६ ॥

वर्तनिस्त्वेकपद्यां स्त्री वर्त्मनिर्मुडुपस्थितौ ॥

क्षिपेः किच्च ॥२-१०७॥

क्षिपणिस्तु प्रकथितो बुधैरायुधवाचकः ॥ ३७६ ॥

अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ॥ २- १०८ ॥

[सान्तोऽयम]र्चिरित्येतज्ज्वालाभासोः प्रकीर्तितात्[तम्] ।

इदन्तोऽप्यर्चिरित्यस्ति णिजन्तादच्चि डा[दच इः] कृते ॥

शोचिर्दीप्तौ शुद्धभावे पिङ्गलत्वे च कथ्यते ।

हविराज्ये च होतव्ये सर्पिः स्यान्न द्वयोर्घृते॥ ३७८ ॥

छदिःशब्दः स्त्रियामेव पटले परिकीर्तितः ।

ईस्मन्त्रन्किषु चेत्यत्र च्छादेर्ह्रस्वो विधीयते ॥ ३७९ ॥

छदिर्हिते ढञ्विधानाच्छादिषेयं विशेष्यवत् ।

छर्दिस्तु वमनव्याधौ इदन्तोऽप्ययमर्चिवत् ॥ ३८० ॥

बृंहेर्नलोपश्च ॥१-१०९॥

बर्हिस्तु ज्वलने पुंसि कुशे स्यादेष न स्त्रियाम् ।

अयं प्राचीनपूर्वस्तु पुंसीन्द्राग्न्योः प्रकीर्तितः ॥ ३८१ ॥

द्युतेरिसिन्नादेश्च जः ॥ २-११० ॥

ज्योतिः पुंस्यनलेऽर्के च क्लीबं तेजोभदृष्टिषु ।

ज्योत्स्ना स्यादेव कौमुद्यां मत्वर्थीये निपातिता ॥३८२॥

1. Pā. VI-iv-97.

ज्यौत्स्नी तु रात्रौ तुतदत्यां [तद्वत्यां]ज्योत्स्नाद्यणि निगद्यते
[1]ज्योतिरायुष इत्यादिसूत्रतः षत्वशासनात् ॥ ३८३ ॥

ज्योतिष्टोमः सामसङ्घभेदे च ततकर्मणि ॥

**वसौ रुचेः संज्ञायाम् ॥ २-१११ ॥**

वसुरुच्योरिति केचित् ॥

वसुरोचिर्यज्ञभेदे रोचिस्तु बहुलोक्तितः ॥ ३८४ ॥

नपुंसकं प्रकाशेऽस्य वसुरुच्योरिति त्विह ।
पाठाद्वसिर्वसौ रोचिर्वज्ञे द्वयमुदाहृतम् ॥ ३८५ ॥

**भुवः किच्च ॥२-११२॥** भुविस्तु शिशिरे पुंसि समुद्रेऽपि प्रकीर्तितः ॥

**सहो धश्च ॥२-११३॥** सधिर्वैश्वानरे धीरैर्वृषभेऽपि निगद्यते ॥ ३८६ ॥

**पिबतेस्थुक्च ॥२-११४॥** पाथिः सूर्ये च चन्द्रेऽब्धौ स्वर्गे चक्षुषि च स्मृतः ।

**जनेरुसिः ॥ २-११५ ॥** जनुर्जन्मनि विद्वद्भिर्नपुंसकमुदाहृतम् ॥ ३८७ ॥

जनुषान्धस्तु जात्यन्धे तृतीयाया अलुग्वशात् ॥

**मनेर्धश्छन्दसि ॥२-११६॥** मधुस्तु छान्दसं क्षौद्रे न द्वयोरभिधीयते ॥ ३८८ ॥

**अर्तिपृवपियजितनिधनितपिभ्यो नित् ॥२-११७॥**

सप्त धातवः ॥

अरुर्व्रणे दिनकरे चन्द्रमस्यपि कथ्यते ।
[2]अरुन्तुदो विध्वैरुषोस्तुद इत्युच्यते खशि ॥ ३८९ ॥

च्वावरूकृतमित्यादि सलोपेन निगद्यते ।
[3]दिवाविभेत्यादिनास्मिन् कृञष्टे स्यादरुष्करः ॥ ३९० ॥

परुर्ग्रन्थौ वपुः काये शुभाकारेऽपि कथ्यते ।
यजुर्वेदे च वेदांशे समाहारे त्वृचोऽस्य च ॥ ३९१ ॥

1. Pā. VIII-iii-83.
2. Pā. III-ii-35.
3. Pā. III-ii-21.

भवेद्दायजुषं द्वन्द्वे तनुः कायेऽथ न स्त्रियाम् ।
धनुश्चापे राशिभेदे सन्नकद्रौ [सल्लकद्रौ] तु पुंस्ययम् ॥
धनुर्धरे त्वसौ धीरैर्वाच्यलिङ्गः प्रकीर्तितः ।
अच्प्रत्ययेन धानुष्के धनुर्ग्रह इति ग्रहः ॥ ३९३ ॥
अनुत्तरपदस्थस्य समासे नित्यषोक्तितः ।
कुप्वोर्विसर्गस्य सिद्धावरुष्करधनुष्करौ ॥ ३९४ ॥
शार्ङ्गधन्वा पुष्पधन्वा बहुव्रीहावनङ्वशात् ।
शतधन्वा शतधनुर्वा संज्ञायामिति स्मृतेः ॥ ३९५ ॥
धनुषा जीवतीत्यर्थे धानुष्कष्ठनि कथ्यते ।
ननुः [तपुः] पुंसि भवेदग्नौ विरोधिनि च भास्करे ॥ ३९६ ॥

**एतेर्णिच्च ॥ २-११८ ॥** जीवितस्य तु कालोऽयस्तत्रायुरभिधीयते ।
आयुर्यत्पुरुषस्यास्ति भवेत्तत्पुरुषायुषम् ॥ ३९७ ॥
द्व्यायुषं त्र्यायुषं चेति द्विगावुभयमीरितम् ।
सूत्रादचतुरेत्यादेस्समासान्ताज्विधानतः ॥ ३९८ ॥
आयुष्टोमः स्मृतो ज्योतिरायुषस्तोम इत्यतः ॥

**चक्षेः शिच्च ॥ २-११९ ॥** दृशि दृग्गोलके चैव चक्षुरित्यभिधीयते ॥ ३९९ ॥
च्वौ सत्यरुर्मनस्सूत्रादत्र चक्षूकृतादयः ।
चक्षुषे हितमित्यर्थे शरीरावयवाद्यति[५] ॥ ४०० ॥
चक्षुष्यः केतकीपुण्डरीकवृक्षरसान्तरे ।
कुलित्थकासुभगयोः चक्षुष्योऽक्षिहितेऽन्यवत् ॥ ४०१ ॥

**मुहेः किच्च ॥ २-१२० ॥** मुहुरित्यव्ययं ज्ञेयं अभीक्ष्णार्थाभिधायकम् ।

१. Pā. V-iv-113.
२. Pā. V-iv-77.
३. Pā. VIII-iii-83.
४. Pā. V-iv-51.
५. Pā. V-i-6.

यो विसर्गस्येदुदुपधस्य चाप्रत्ययस्यः[यस्य षः] ॥४०२॥

स कुप्वोः प्रतिषिद्धोऽस्य मुहुःकाम मुहुःप्रिय ॥

बहुलमन्यत्रापि ॥२-१२० ॥

आचक्षुरादिर्बहुलमन्यत्रापीत्युदाहृतिः ॥ ४०३ ॥

कृगृशृवृञ्चतिभ्यः ष्वरच् ॥ २-१२१ ॥

पञ्च धातवः। केचित्तु वृञः स्थाने पृधातुं पठन्ति ॥

कर्वरो रक्षसि व्याघ्रे शिलायां कर्वरी स्त्रियाम् ।
गर्वरः स्यादहङ्कारे सन्ध्यायां गर्वरी स्त्रियाम् ॥ ४०४ ॥

शर्वरी तु त्रियामायां कामिन्यामपि कथ्यते ।
शार्वरं त्वन्धतमसे घातुकेऽप्यणि शैषिके॥ ४०५ ॥

वर्वरः पामरे केशविन्यासे नीवृदन्तरे ।
भञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्॥४०६॥

पृपाठे देवजातौ च केशवक्रे च पर्वरः ।
स्त्रीलिङ्गः पर्वरीत्येष निम्नगायां निगद्यते ॥४०७ ॥

चत्वरं त्वङ्गणे क्लीबं स्थण्डिले ना चतुष्पथे ।
स्त्रीलिङ्गश्चत्वरीत्येष रथ्यायां परिकीर्तितः ॥

नौ सदेः ॥ २-१२२ ॥

निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी ॥ ४०८ ॥
इति श्रीधरवंश्येन रचिते पेरुशास्त्रिणा ।
द्वितीयपादः पूर्णोऽभूदौणादिकपदार्णवे ॥ ४०९ ॥



१. Pa. VIII-iii-41.

॥ श्रीः ॥

छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ॥३-१॥

एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते। एकादशः संपद्वर इत्येके ॥

छित्वरं छेदनद्रव्ये धूर्ते वैरिणि च त्रिषु ।
छत्वरं कुञ्जगृहयोः कैवर्ते धीवरः स्मृतः ॥ १ ॥

पीवरः कच्छपे स्थूले मीवरो हन्तृमानिनोः ।
भिक्षुकाणां प्रावरणे चीवरं स्यान्नपुंसकम् ॥ २ ॥

तीवरो ना जलनिधौ व्याधेऽपि परिकीर्तितः ।
स्यान्नीवरो वाणिजके वास्तवे जटिलेऽपि च ॥ ३ ॥

गह्वरस्तु गुहादम्भनिकुञ्जभवनेषु च ।
कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम् ॥ ४ ॥

संयद्वरः स्मृतोऽनूपे कैश्चिदुक्तो द्वितीयपः ।
उपह्वरं बाहुलकाज्जुह्वतेरुपपूर्वकात् ॥ ५ ॥

लोपे सत्यप्युकारस्य समीपैकान्तयोर्जगुः ।
ह्वरतेर्वाधिकरणे घे सिद्धमिति कथ्यते ॥ ६ ॥

इण्सिञ्जिदीङुष्यविभ्यो नक् ॥३-२॥

षड् धातवः ॥

इनः सूर्ये नृपे पत्यावात्मनीन्द्रे च कथ्यते।
सिनं शरीरे क्लीबं स्यात्काणे पुंसि सिनः स्मृतः ॥ ७ ॥

जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे ।
दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत् ॥ ८ ॥

उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गवत् ।
ईषदुष्णे कदुष्णं च कवोष्णं कोष्णमित्यपि ॥ ९ ॥

रूपत्रयं कैवं चोष्ण इति सूत्रेण सिध्यति ।
उष्णासहे स्यादुष्णालु शीतौ सत्यभिधेयवत् ॥ १० ॥

शीतोष्णाभ्यां कारिणि कन्युष्णकः शीघ्रकारिणि ।
उष्णंकरणमित्युष्णभद्रयोः[३] करणे मुमि ॥ ११ ॥

रणोद्वेगे च हीने च बुधैरूनमुदाहृतम् ॥

**फेनमीनौ** ॥ ३-३ ॥ फेनः सारस्वतकफे फेनिलस्तद्वति त्रिषु ॥ १२ ॥

फेनादिलचेति चेन फेनलो लज्वशाद्भवेत् ।
मतुप्समुच्चयार्थान्यतरस्यामस्य वृत्तितः ॥ १२ ॥

फेनवानित्यपि भवेन्मीनो राश्यन्तरे झषे ।
ठकि प्राग्वहतीये स्यान्मैनिको मीनहन्तरि ॥
मीनस्यैकस्य पर्यायेष्विष्टत्वात्प्रत्ययो भवेत् ॥ १४ ॥

**कृषेर्वर्णे** ॥ ३-४ ॥ व्यासार्जुनाग्निहरिकोकिलकाकशूद्र-
तामिस्रपक्षकलिनीलगुणेषु कृष्णः ।
द्रव्ये त्रिषु द्रुपदजातटिनीकणा च
कृष्णाथ लोहमरिचे दुरितं च कृष्णम् ॥ १५ ॥

**बन्धेर्ब्रधिबुधी च** ॥ ३-५ ॥ ब्रध्नः सूर्ये द्विजे बुध्नो मूले स्वर्गे च शङ्करे ॥

**धापॄवस्यज्यतिभ्यो नः** ॥ ३-६ ॥ धाना भृष्टयवे प्रोक्तो धान्याकेऽभिनवोद्भिदि ॥ १६

पर्णं तु छदने क्लीबं पुंलिङ्गः किंशुके स्मृतः ।
भारद्वाजे तु पर्णीयं पार्णमन्यत्र वाच्यवत् ॥ १७ ॥

वस्नः स्याद्वेतने मूल्ये वसनद्रव्ययोरपि ।
ठना वहत्यावहति हरतीत्यत्र वस्निकः ॥ १८ ॥

१. Pā. VI-iii-107.
२. Pā. V-iii-72.
३. Vā. VI-iii-70.
४. Pā. V-ii-99.
५. Pā. III-iv-3.

वस्नेन जीवतीत्यर्थे ठनि वस्निक उच्यते ।
वेनस्तु लुण्टके प्रोक्तो राजभेदे प्रजापतौ ॥ १९ ॥

अब्रः सूर्ये बाहुलकात्पङ्क्तौ श्रोणोऽपि लभ्यते ॥

**लक्षेरट् च ॥ ३-७ ॥** लक्षेरट् चेति सूत्रेऽत्र व्याख्याभेदेन पण्डितैः ॥ २० ॥

लक्षणो लक्ष्मणश्चेति रूपद्वयमुदाहृतम् ।
लक्षणं नाम्नि चिह्ने च रामभ्रातरि लक्ष्मणः ॥ २१ ॥

लक्षणा हंसयोषायां सारस्यामपि कथ्यते ।
सेनान्तलक्षणेति ण्ये लाक्षण्योऽपत्यमस्य चेत् ॥ २२ ॥

इञ्प्रत्ययादुदीचांमिञिति लाक्षणिरुच्यते ।
आश्वलक्षणिकस्त्वश्वलक्षणाध्येतृवेदिनोः ॥ २३ ॥

विद्यालक्षणकल्पान्ताद्वार्तिके ठञ्विधानतः ।
चिह्ननाम्नोः सलक्ष्मके सौमित्रौ सारसस्त्रियाम् ॥ २४ ॥

क्रमेण लक्ष्मणः क्लीबे त्रिषु पुंसि स्त्रियामपि ॥

**वनेरिच्चोपधायाः ॥ ३-८ ॥** वेन्नाशब्दस्तरङ्गिण्यां स्त्रियां विद्वद्भिरुच्यते ॥ २५ ॥

**सिवेष्टेर्यू च ॥ ३-९ ॥** स्यूना तु रशनायां स्त्री स्यूनः किरणसूर्ययोः ।
दीर्घोच्चरणसामर्थ्यान्न गुणस्यात्र संभवः ॥ २६ ॥

असन्नियोगशिष्टेन कृते बाहुलकादिह ।
छ्वोः शूडित्यादिना छोठि स्योनोऽप्यर्थस्तु पूर्ववत् ॥ २७ ॥

**कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ॥ ३-१० ॥** कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि ।
चतुरर्थ्यां वुञ्छणादि फिञा कार्णायनिः स्मृतः ॥ २८ ॥

कनि कर्णललाटादित्यलङ्कारे तु कर्णिका ।
उपकर्णप्रायभवे त्रिषु स्यादौपकर्णिकम् ॥ २९ ॥

१. Pā. IV-i-152.
२. Pā. IV-i-153.
३. Vā. IV-ii-60.
४. Pā. VI-iv-19.
५. Pā. IV-iii-65.

अच्प्रत्यये सति स्तम्बेकर्णयोरिति सूत्रतः ।
जपेः कर्णेजपः कर्णोपपदात्कथितः खले ॥
कर्णमूले कर्णजाहमिति जाहचि कथ्यते ॥ ३० ॥

वर्णः स्वर्णकुथाकुनुतगुणशोभायशोलेपेषु [?] ।
गीतिक्रमे द्विजादौ शुक्लादौ चाक्षरे तु वर्णं वा ॥

स्यादिनिप्रत्यये त्वस्माद्वर्णीति ब्रह्मचारिणि ।
वार्तिकादिह चान्येभ्योऽपि दृश्यत इति स्मृतात् ॥३२॥

वर्णवः सूपकारे स्यान्मत्वर्थीयवशासनात् ।
दुर्वर्णं रजते क्लीबं सुवर्णं काञ्चने स्मृतम् ॥ ३३ ॥

अवर्णस्तु परीवादे पुंसि धीरैर्निगद्यते ।
जर्णश्चन्द्रे द्रुमे वृद्धे स्त्रियां सेनाबले स्मृता ॥ ३४ ॥

सेनायां समवैत्यत्र ण्यठकोः सैन्यसैनिकाः ।
हरिषेणात्मजे हारिषेण्यः सेनान्तसूत्रतः ॥ ३५ ॥

हारिषेणिरुदीचांमिञिति सूत्रान्तरादिञि ।
सेनाचरश्चरेर्भिक्षासेनादायेषु चेति टे ॥ ३६ ॥

द्रोणः कृपीपतौ काकभेदवृश्चिकयोश्च ना ।
अस्त्र्याढके तच्चतुष्के द्रोणी काष्ठाम्बुवाहिनी ॥ ३७ ॥

प्राग्वतीये ठञि द्रोणवाहे स्यात् द्रौणिकस्त्रिषु ।
अणूठञोः स्यात्तत्पचति द्रोणादणिति
सूत्रतः [ वार्तिकात् ] ॥ ३८ ॥

द्रौणश्च द्रौणिकः स्त्रीत्वे द्रौणी च द्रौणिकी स्मृता ।
द्रोणपर्वतजीवन्तादिति सूत्रेण वा फकि ॥ ३९ ॥

१. Pā. III-ii-13.
२. Vā. V-ii-109.
३. Pā. IV-1-152.
४. Pā. IV-1.153.
५. Pā. III-ii-17.
६. Vā. v-1-52.
७. Pā. IV-1-103.

द्रौणायन इञा द्रौणिः द्रोणापत्येऽत्र कीर्तितौ ।
पन्नस्तु नीचैर्गमने संपन्नो वित्तशालिनि ॥ ४० ॥

पीडिते तु विपन्नः स्यात्प्रपन्नः शरणागते ।
आर्ते प्राप्तेऽपि चापन्नः स्यादुत्पन्नः समुद्गते ॥ ४१ ॥

डे पन्नगो मौ [?] सर्वत्र[1] पन्नयोरिति वार्तिकात् ।
केचित्तु पद्यतेः[2] क्तान्तं वार्तिके तत्र चक्षते ॥ ४२ ॥

स्याद्भक्तभुक्तयोरन्नमान्नोन्नं लब्धरीह णे ।
निपातनात्[3] ब्राह्मणकौष्णिक इत्यादिसूत्रतः ॥ ४३ ॥

अन्नशब्दस्योष्णभावे यवाग्वामुष्णिका कनि ।
स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान् ॥ ४४ ॥

**धेट इट् च ॥ ३-११ ॥** धेनः समुद्रे नद्यां तु धेना क्वचन वाच्यपि ॥
**तृषिशुषिरसिभ्यः कित् ॥ ३-१२ ॥** पिपासालिप्सयोस्तृष्णा शुष्णः सूर्याग्निरश्मिषु ॥ ४५ ॥

रस्नो दण्डाश्रयोः पुंसि रस्नं द्रव्ये नपुंसकम् ॥
**सुञो दीर्घश्च ॥ ३-१३ ॥** सूनं प्रकथितं धीरैरुच्छूने वाच्यलिङ्गकम् ॥ ४६ ॥

पुष्पे च प्रसवे क्लीबं सूना पुत्र्यां वधस्थले ॥
**रमेस्त च ॥ ३-१४ ॥** रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ॥ ४७ ॥

एतत्पूर्वस्त्वक्षरान्तः शब्दः सिद्धौ प्रकीर्तितः ।
**रास्नासास्नास्थूणावीणाः ॥ ३-१५ ॥** रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् ॥ ४८ ॥

घटस्य वलयाकारमुखप्रान्तेऽपि कथ्यते ।
सास्ना धेनुगलोद्देशकम्बले कथिता बुधैः ॥ ४९ ॥

स्थूणायःप्रतिमायां च स्तम्भेऽपि वरवेश्मनाम् ।
स्त्रीलिङ्गे गृहपूर्वत्वे त्वेतदाहुर्नपुंसकम् ॥ ५० ॥

१. Vā. III-ii-48.

२. See the Kaumudi for an expression of a similar view under Pā. III-ii-48.

३. Pā. V-ii-71.

वीणा विद्युति वल्लक्यां प्रवीणः कुशले त्रिषु ।
वीणावादनशिल्पी यः तत्र स्याद्वैणिकस्त्रिषु ॥ ५१ ॥

व्रीह्यादित्वादिनावस्माद्वीणी वीणावतः स्मृतः ॥

**गादाभ्यामिष्णुच् ॥ ३-१६ ॥**

गेष्णुर्नटे गायके च देष्णुर्दातरि दुर्दमे ॥ ५२ ॥

**कृत्यशूभ्यां स्नक् ॥ ३-१७ ॥**

कृत्स्नं कुक्ष्यम्बुसर्वेषु भवेदक्ष्णमखण्डके ॥

**तिजेर्दीर्घश्च ॥ ३-१८ ॥**

तीक्ष्णं सामुद्रलवणविषलोहाजिमुष्कके ॥ ५३ ॥

यवक्षारे [यवाग्रके] तु पुंस्येष तिग्मात्मत्यागिनोस्त्रिषु ॥

**श्लिषेरच्चोपधायाः ॥ ३-१९ ॥**

श्लक्ष्णं त्वकर्कशे सूक्ष्मे वाच्यवत्स्यान्निरन्तरे ॥ ५४ ॥

**यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ ३-२० ॥**

पञ्च धातवः ॥

यज्युः शिष्टेऽपि चाध्वर्यौ मन्युर्दैन्ये क्रतौ क्रुधि ।
शुन्ध्युरग्नौ च सलिले दस्युश्चोरे रिपावपि ॥ ५५ ॥

जन्युः प्रजापतौ प्राणिन्यपि स्याज्जातवेदसि ॥

**भुजिमृङ्भ्यां युक्त्युकौ ३-२१ ॥**

भुज्युस्तु भोजने सूर्ये मृत्युर्दैन्ये मृतौ यमे ॥ ५६ ॥

**सर्तेरयुः ॥ ३-२२ ॥**

अयूरिति पाठान्तरम् ॥

सरयुः सरयूश्च द्वे पाठभेदान्नदीभिदि ।
सारवः स्यादत्र भवे दाण्डिनायनसूत्रतः ॥ ५७ ॥

**पानीवि[वी]षिभ्यः पः ॥ ३-२३ ॥**

चत्वारो धातवः ॥

पापं तु किल्बिषे पापस्तद्वति स्यात्त्रिलिङ्गकः ।
समासे कुत्सितैरस्य पापनापितकादयः ॥ ५८ ॥

नेपः पुरोहिते नीपस्त्वत्र बाहुलकाद्गुणे ।
अकृते सति बन्धूके नीलाशोके कदम्बके ॥ ५९ ॥

उक्तो वेपस्तु पानीये सेपः स्याद्बन्धसाधने ।

**च्युतेः किच्च ॥ ३-२४ ॥**

च्युपं तु वक्त्रवचनमाहुः क्लीबे विमर्शकाः ॥ ६० ॥

१. Pā. VI-iv-174.

**स्तुवो दीर्घश्च ॥३-२५॥** स्तूपः पुंसि समुच्छ्राये विद्वद्भिः परिकीर्तितः ॥

**सुशृभ्यां निच्च ॥३-२६॥** सूपो व्यञ्जनभेदे स्यात्सूपकारेऽपि कीर्तितः ॥ ६१ ॥

शृणातेः प्रत्यये चास्मिन्नुत्वे बाहुलकात्कृते ।
प्रस्फोटने शूर्पमस्त्री दन्त्यादिमपरे जगुः ॥ ६२ ॥

तदा तु धातुभेदे च दशपाद्यां विवेचितः ।
आर्हीयार्थेष्विह स्याताम्ञ्ठञ्भ्यां शौर्पशौर्पिके ॥ ६३ ॥

क्रीतं द्वाभ्यां तु शूर्पाभ्यां द्विशूर्पमनयोर्लुकि ।
अध्यर्धशूर्पमप्येवमर्हीयस्य द्विगोर्हि लुक् ॥ ६४॥ ॥

द्विशौर्पिकं द्विशूर्पेण क्रीतं ठञि लुगन्ततः ।
यद्यप्यस्मिन् प्रकरणे संख्यापूर्वपदस्थले ॥ ६५ ॥

तदन्तविधिरस्त्येव तथाप्यलुकि तेन नाञ् ।
सूत्रेण परिमाणान्तस्यासंज्ञा शाणयोरिति ॥ ६६ ॥

कृते ठञ्युत्तरपदवृद्धिरत्र द्विशौर्पिके ॥

**कुयुभ्यां च ॥ ३-२७ ॥** कूपः कूपकगर्तान्धुमृन्मानगुणवृक्षके ॥ ६७ ॥

कौपीनं स्यादकार्ये च चीरप्रगुह्यदेशयोः ।
यज्ञस्तम्भे तु कथितो यूपशब्दः पुमानसौ ॥ ६८ ॥

**खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥ ३-२८ ॥** सप्त शब्दाः ॥

खष्पः क्रोधे बलात्कारे खलीने तु नपुंसकम् ।
शिल्पमुद्योगनैपुण्ये शष्पस्तु प्रतिभाक्षये ॥ ६९ ॥

पुमान् बालतृणे त्वेष न द्वयोः परिकीर्तितः ।
ऊष्माश्रुणोः पुमान् बाष्पो रूपं स्यान्नाटके पशौ ॥७०॥

स्वभावेऽपि च सौन्दर्ये शुक्लादौ श्लोकशब्दयोः ।
आहतं वा प्रशस्तं वा रूपं यस्यास्ति तत्र तु ॥ ७१ ॥

1. Pā. VII-iii-17.

मत्वर्थीये यति भवेद्रूप्यमित्यभिधेयवत् ।
रूपधेयं भागरूपनामभ्यः स्वार्थधेयतः ॥ ७२ ॥

पर्पं गृहे पङ्गुपीठे भवेद्बालतृणेऽपि च ।
पर्पादिभ्यष्ठनि कृते स्यात्पङ्गौ पर्पिकस्त्रिषु ॥ ७३ ॥

स्त्रियां तु पर्पिकी षित्वान्ङीषि विद्वद्भिरुच्यते ।
तल्पमट्टे च शय्यायां दारेष्वपि निगद्यते ॥ ७४ ॥

**स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ ३-२९ ॥**

पञ्च धातवः ॥

स्तनयित्नुः पुमान् मेघे मृगे रोगे घनध्वनौ ।
हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे ॥ ७५ ॥

गदयित्नुः पुमान् कामे जल्पाके कामुकेऽपि च ।
मदयित्नुर्मदे कामे पुमान्मद्ये नपुंसकम् ॥

**कृहनिभ्यां क्त्नुः ॥ ३-३० ॥**

क्त्नुः प्रत्ययः । किदयम् ॥

कृत्नुः शिल्पिनि हत्नुस्तु व्याधौ शस्त्रेऽपि कथ्यते ॥

**गमेः सन्वच्च ॥ ३-३१ ॥** जिगत्नुस्तु प्रकथितो गतिशीले विशारदैः ॥ ७७ ॥

क्त्नोः कित्त्वादगुणः कृत्नौ न मलोपोऽन्ययोरपि ।
प्रत्यये दशपादीयास्तकारं न बभाषिरे ॥ ७८ ॥

तत्तल्लक्ष्यविरोधेन तदेतन्नाम नोदितम् ॥

**दाभाभ्यां नुः ॥ ३-३२ ॥** दानुर्दातरि विक्रान्ते भानुः किरणसूर्ययोः ॥ ७९ ॥

सूर्यवह्न्योश्चित्रभानुः स्वर्भानुस्सिंहिकासुते ॥

**वचेर्गश्च ॥ ३-३३ ॥** वावदूकार्थको वग्नुशब्दस्त्रिषु निगद्यते ॥ ८० ॥

**धेट इत् च ॥ ३-३४ ॥** सा गौर्धेनुरिति प्रोक्ता या भवेन्नवसूतिका ।
जातेः समासे गोधेनुः पोटायुवतिसूत्रतः ॥ ८१ ॥

१. Vā. V-iv-25.  २. Pā. II-i-65.

उत्सौधञा धैनवं स्याद्थें प्राग्दीव्यतीयके ।
बैष्कयास इति ह्यस्ति सूत्रमुत्सादिषु स्मृतम् ॥ ८२ ॥

तदन्तविधिरेष्वस्मादसे वचनतो भवेत् ।
धेन्वन्तादपि तेनाञ् स्याद्धेनुपाठेऽपि तद्गणे ॥ ८३ ॥

तेन गौधेनवमपि भवेदाधेनवं तथा ।
अत्र ठञभाव्यनञ् धेनुरुक्तो ह्यापिशलेर्मते ॥ ८४ ॥

तस्मात्पक्षे धैनुकं च गौधेनुकमपीष्यते ।
अचित्तहस्तिधेनोष्ठगिति बृन्देऽपि धैनुकम् ॥ ८५ ॥

बन्धके या स्थिता धेनुः सा धेनुष्या निगद्यते ।
धेनुंभव्या स्मृता धेनोर्भव्यायामिति मुम्विधेः ॥ ८६ ॥

स्याद्धेन्वडुहं द्वन्द्वे समाहाराभिधायिनि ॥

**सुवः किच्च ॥३-३५॥** सूनुस्तु कथितः सूर्ये तनुजेऽप्यनुजेऽपि च ॥ ८७ ॥

**जहातेर्द्वेऽन्तलोपश्च ॥ ३-३६ ॥**

जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने ।
अण्प्रत्ययेऽस्मात्कथितो गङ्गायां जाह्नवी स्त्रियाम् ॥८८॥

**स्थो णुः ॥ ३-३७ ॥** स्थाणुः कीले पशुपतौ पुमानस्त्री ध्रुवे स्मृतः ॥

**अजिवृरीभ्यो निच्च ॥ ३-३८ ॥** वेणुर्नृपान्तरे वंशे वर्णुर्देशे नदान्तरे ॥ ८९ ॥

रेणुः स्त्रीपुंसयोर्धूलौ पुमान् पर्यटके पुनः ॥

**विषेः किच्च ॥ ३-३९ ॥** विष्णुर्नारायणे पुंसि सूर्ये च वसुदेवते ॥ ९० ॥

**कृदाधाराचिकलिभ्यः कः ॥ ३-४० ॥** षड्धातवः ॥

कर्को वह्नौ सिताश्वे च पुट[घट]भेदे च दर्पणे ।
इवार्थे त्वत्र कार्कीक ईककां कैर्कलोहितात् ॥ ९१ ॥

१. Pā. IV-1-86.
२. Pā. IV-1-86.
३. Pā. IV-ii-48.
४. Vā. VI-iii-66.
५. Pā. V-iii-110.

दा····धायकं····[दाको दातरि धाकः] स्यादाधारे वृषभेऽपि च ।
राका नद्यन्तरे प्रोक्ता नवजातरजःस्त्रियाम् ॥ ९२ ॥

संपूर्णेन्दुतिथौ चापि कच्छ्वामपि निगद्यते ।
अर्कोऽर्ककर्णे[पर्णे] स्फटिके रवौ ताम्रे दिवस्पतौ ॥९३॥

कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके ।
विट्किट्टयोश्च पापे च त्रिषु पाशाशये पुनः ॥ ९४ ॥

लशकतद्धित इति कस्येत्वं वा कथा तयोः[दाकधाकयो.] ।
राकायामपि केऽणैश्च नात्र बाहुलकाद्भवेत् ॥ ९५ ॥

उत्तरत्र यथायोगमेवमूह्यं विचक्षणैः ।
रमेर्बाहुलकादत्र रङ्कः कृपणमन्दयोः ॥ ९६ ॥

अस्मिन् कपिलकादीनां वेति लत्वे विकल्पिते ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ॥ ९७ ॥

**सृवृभूशुषिमुषिभ्यः कित् ॥ ३-४१ ॥**

पञ्च धातवः ॥

सृकः सरणशीलेऽपि मारुते चोत्पले शरे ।
वृकस्तु श्वापदे काके भूकं तु छिद्रकालयोः ॥ ९८ ॥

शुष्कशब्दो नीरसेऽर्थे वाच्यवल्लिङ्ग उच्यते ।
मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च ॥ ९९ ॥

मुष्करः स्याद्दूषसुषीत्यादौ मत्वर्थरस्मृतेः ॥

**शुकवल्कोल्काः ॥ ३-४२ ॥** शुको व्याससुते कीरे रावणस्य च मन्त्रिणि ॥ १०० ॥

शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ।
शुकानां संहतौ शौकं खण्डिकाद्यञि कथ्यते ॥ १०१ ॥

१. Pā. I-iii-8.
२. Pā. VII-iv-13.
३. See the gana under VI-i-112
४. Pā. V-ii-108.
५. Pā. IV-ii 45.

वल्कोऽस्त्री वल्कले शल्के स्यादुल्का तु विभावसौ ।
निर्गतज्वालकाष्ठे च ज्वालायामपि कथ्यते ॥ १०२ ॥

णूभीकापाशल्यतिमर्चिभ्यः कन्॥ ३-४३ ॥

सप्त धातवः ॥

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥ १०३ ॥

नित्यैकवचनान्तोऽयं संख्यावाची विनिश्चितः ।
असहायार्थकादस्मादाकिनिच् कन्लुकौ विधेः ॥ १०४ ॥

एकाकी चैककश्चैक इति रूपत्रयं भवेत् ।
ऐकध्यमेकधा चैकाद्धो ध्यमुञ्वा स्मृतो यतः ॥ १०५ ॥

सकृदेकस्य कृत्वोऽर्थे सकृद्भावसुचोर्विधेः ।
द्विबह्वोर्विषये त्वेकाच्च प्राचामिति सूत्रतः ॥ १०६ ॥

डतरे डतमे चैकतरश्चैकतमोऽपि च ।
स्यादैकागारिकश्चोरे स्त्रियां टित्वेन ङीबिह ॥ १०७ ॥

एकादिश्चैकस्य चादुगिति नञ्प्रकृतित्वतः ।
सत्यादुगागमे चास्य भवेदेकान्नविंशतिः ॥ १०८ ॥

अनुनासिकपक्षोऽयमन्यत्रैकाद्नविंशतिः ।
तृतीयायाः समासोऽत्र ज्ञेयो यौगविभागिकः ॥१०९॥

पूर्वं नञा तत्पुरुषे तृतीयानुसमस्यते ।
एकनाथादयः पूर्वकालैकेति समासतः ॥ ११० ॥

आदित्यान्महतःसूत्रमध्ये योगविभागतः ।
निर्देशतो वा प्रागेकादशभ्य इति दर्शितात् ॥ १११ ॥

भवेदेकादशेत्यात्वं द्वन्द्वे तत्पुरुषेऽपि वा ।
तादर्थ्यादपि ताच्छब्द्ये य एकादश ते दश ॥ ११२ ॥

१. Pā. V-iii-44.
२. Pā. V-iii-94.
३. Pā. II-i-49.
४. Pā. VI-iii-46.
५. Pā. V-ii-118.

स्युर्दशैकादशाः ष्ठनष्ठञ्सूत्रेऽकारनिपातनात् ।
दशैकादशिको गर्ह्यान्य एतान् संप्रयच्छति ॥ ११३ ॥
एकादशं सहस्रं वा शतमेकादशाधिकम् ।
खल्लुग्भ्यां[खलुग्भ्यां च] क्रमेणैकधुरीणैकधुराविह ॥
वहन्नेकधुरं योऽस्ति तत्र स्यातामुभाविमौ ।
मत्वर्थ एकगोपूर्वाट्ठञ्नित्यमिति सूत्रतः ॥ ११५ ॥
तद्वत्युदीरितावैकशतिकैकसहस्रिकौ ।
पूर्वकालैकसूत्रेण कर्मधारय एव सः ॥ ११६ ॥
अन्यत्रानभिधानान्न स्यादिनिर्वाप्यतः क्वचित् ।
सौत्रनिर्देशतो ह्येकदेशिनेति यदिष्यते ॥ ११७ ॥
सर्वैकान्येति सप्तम्याः काले दा चेदिहैकदा ।
संख्यैकवचनाच्चेति वीप्सायामेकशः शसा ॥ ११८ ॥
वीप्सानुक्तौ शसाल्पार्थात् द्वित्वेनैककशः स्मृतम् ।
मण्डूके कातरे भेकः काको ना चिरजीविनि ॥११९॥
वृक्षभेदे पीठसर्पिण्यपि द्वीपान्तरेऽपि च ।
काका स्यात्काकनासायां काकोली काकजङ्घयोः ॥१२०॥
रक्तिकायां मलप्वां च काकमाच्यां च योषिति ।
काकं सुरतबन्धे स्यात्काकनामपि संहतौ ॥ १२१ ॥
वेषधारे च हृष्टे च ज्येष्ठे च क्वचिदिष्यते ।
पाकः शिशौ परिणतौ स्थाल्यादौ पचनेऽपि च ॥१२२
केशस्य जरसा शौक्ल्ये विष्ठायामपि कथ्यते ।
शल्कं तु शकले वल्के पुंसि मुद्गरसूर्ययोः ॥ १२३ ॥
अत्कस्त्वासन्नपथिकशरीरावयवेषु ना ।
मर्कः शरीरवाय्वग्नौ नवनीतेषु चेतसि ॥ १२४ ॥

१. Pā. IV-iv-31.
२. Pā. IV iv-30.
३. Pā. V-ii-118.
४. Pā. II-i-49.
५. Pā. V-iii-51.
६. Pā. V-iv-43.

श्यतेर्बाहुलकाच्छाकः पुमान् द्वीपे द्रुमे नृपे ।
शक्तौ हारीतकाख्ये तु न स्त्रियामयमुच्यते ॥ १२५ ॥

भवार्थे तु दिगादित्वादस्माद्यत्प्रत्यये कृते ।
बुद्धे शाक्यस्तत्र शाक्यसिंहशाक्यमुनी अपि ॥ १२६॥

स्त्रियां शाकीति कथिता शाके महति कोविदैः ।
तत्र शाकीपलालीति पामादिगणसूत्रतः ॥ १२७ ॥

मत्वर्थीये वाच्यलिङ्गं ह्रस्वतः शाकिनं स्मृतम् ॥
**नौ ह्रः ॥ ३-४४ ॥** गोधिकायां तु विबुधैर्निहाका परिकीर्तिता ॥ १२८॥

**नौसदेर्डिच्च ॥ ३-४५ ॥** निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।
वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च ॥ १२९ ॥

असमासे ठका प्रोक्तमार्हीयार्थेषु नैष्किकम् ।
समासे परिमाणान्तस्यासंज्ञाशाणयोरिति ॥ १३० ॥

ठञि स्यादुत्तरपदवृद्धौ परमनैष्किकम् ।
क्रीतं तु पञ्चभिर्निष्कैः पञ्चनिष्कं ठञो लुकि ॥१३१॥

सूत्रेण वा द्वित्रिपूर्वान्निष्कादिति लुगीरणात् ।
द्विनैष्किकं द्विनिष्कं च त्रिनिष्कं च त्रिनैष्किकम् ॥

बहुपूर्वात्प्रवर्त्कैऽव्यमिति वार्तिकदर्शनात् ।
बहुनैष्किकमप्यत्र बहुनिष्कं च कथ्यते ॥ १३३ ॥

**स्यमेरीट् च ॥३-४६॥** स्यमेरिट् चेति ह्रस्वपाठो वा ॥
स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः
स्यमेरिट्चेति सह्रस्वपाठे तु स्यमिकोऽप्यसौ ॥ १३४ ॥

**अजियुधिनीभ्यो दीर्घश्च ॥ ३-४७ ॥** चत्वारो धातवः ॥
वीकः स्याद्गन्धवाहेऽपि पक्षिण्यक्षिमलेऽपि च ।
यूका केशक्रिमौ तद्वान् यूकालो लुकि[लचि] कथ्यते ॥

१. Pā. V-ii-100.
२. Pā. VII-iii-17.
३. Pā. V-1-30.
४. Vā. V-1-30.

सिध्मादिषु क्षुद्रजन्तूपतापाच्चेति सूत्रणात् ।
घूको वायौ कामिलायां घूकानीको द्रुमान्तरे॥ १३६ ॥

**ह्रियो रश्च लो वा ॥ ३-४८ ॥**

ह्रीका ह्लीकेति शब्दौ द्वावपि लज्जाभिधायिनौ।
आद्यः पुंसि चरौ ताने द्वितीयो नकुले पुमान् ॥१३७॥

**शकेरुनोन्तोऽन्त्युनयः ॥ ३-३९ ॥**

चत्वारः प्रत्ययाः ॥

शकुनः पुंसि कथितः पक्षिभेदेऽपि पक्षिणि ।
शुभशंसिनिमित्ते तु शकुनं स्यान्नपुंसकम् ॥ १३८ ॥
शकुन्तः कीटभेदेऽपि भासे पक्षिणि चोच्यते ।
खगे शकुन्तिः शकुनिः करणे सौबले खगे ॥ १३९ ॥
पक्षिमत्स्यमृगान् हन्तीत्यत्र प्राग्वहतेष्ठकि ।
सपर्यायविशेषाणां ग्रहणात्तस्य हन्तरि ॥ १४० ॥
आद्यन्तयोः शाकुनिको मतः शाकुन्तिकोऽन्ययोः ।
कमेर्बाहुलकादुन्तौ कुभावे प्रकृतेरपि ॥ १४१ ॥
आदिलोपे प्रत्ययस्य कुन्तिर्जनपदे स्मृतः ।
तस्य राजनि तत्रत्यजनेऽपि प्रचुरश्रुतिः ॥ १४२ ॥
विवक्षितेऽर्थे कुन्तीनां निवासा इति कुन्तयः ।
स्युश्चातुरर्थिकस्यात्र शिष्टेर्जनपदे लुपः ॥ १४३ ॥
कुन्तीनां राज्ञि कौन्त्यः स्याद्वृद्धेदित्यादिना ञ्यङि ।
एवं कुन्तेरपत्येऽपि कौन्त्यस्तद्राजशासनात् ॥ १४४ ॥
बहुत्वे लुकि सत्यत्र कुन्तयः परिकीर्तिताः ।
स्त्रियामवन्तिकुन्तीति ञ्यङ्प्रत्ययलुकि स्त्रियाम् ॥१४५॥

१. Ganasūtra under Pā. V-ii-97.
२. Pā. IV-iv-35.
३. Pā. IV-i-171.
४. Pā. II-iv-62.
५. Pā. IV-i-176.

इतो मनुष्यजातेर्ङीष्युक्ता कुन्तीति सूरिभिः ।
कुन्ती पाण्डुप्रियायां च सल्लक्यां गुग्गुलुद्रुमे ॥ १४६॥

मनुष्यजातेरन्यत्र कृदिकारादिति स्म ङीष् ॥

भुवो झिच् ॥ ३-५० ॥ वर्तमानस्तु कालो यो भवन्तिस्तत्र कथ्यते ॥ १४७ ॥

अवेरपि पदेऽप्येष भवेद्बाहुलकेन झिच् ।
अवन्ती नगरीभेदे काञ्जिकेऽपि प्रकीर्त्यते ॥ १४८ ॥

वदन्तीति वचोमात्रे किंवदन्ती जनश्रुतौ ।

कन्युच् क्षिपेश्च॥३-५१॥ क्षिपण्युस्तु पुमान् देहे सारथौ वाच्यलिङ्गकः ॥

कन्युच्चेति चकारेण भुवोऽप्येष प्रवर्तते ।
एवमुत्तरसूत्रेऽपि चात्क्षिपेरनुडाहृतः ॥ १५० ॥

भुवन्युः स्वामिनि ब्रध्ने ज्वलने शशलाञ्छने ॥

अनुङ् नदेश्च ॥३-५२॥ नदनुर्वारिवाहे ना क्षिपणुस्तु समीरणे ॥ १५१ ॥

कृवृदारिभ्य उनन् ॥ ३-५३ ॥ करुणस्तु रसे वृक्षे कृपायां करुणा मता ।
वरुणस्तरुभेदेऽपि[ऽप्सु] प्रतीचीपतिसूर्ययोः ॥ १५२ ॥

दारुणो रसभेदे च त्रिषु तु स्याद्भया....[वहे] ।

त्रो रश्च लो वा ॥ ३-५४ ॥ तरुणः कुब्जपुष्पे ना रुचके यूनि तु त्रिषु ॥ १५३ ॥
तलुनोऽपि भवेद्यूनि तरुणी तलुनी स्त्रियाम् ।

क्षुधिपिशिमिथिभ्यः कित् ॥ ३-५५ ॥ क्षुधुनो म्लेच्छजातौ स्यात्पिशुनं कुङ्कुमे स्मृतम् ॥१५४॥
कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु ।
पृक्कायां पिशुना स्त्री स्यान्मिथुनं राशियुग्मयोः ॥१५५॥

फलेर्गुक् च ॥ ३-५६ ॥ फल्गुनस्त्वर्जुने भीष्मे तपस्ये ककुभद्रुमे ।
अस्मात्प्रज्ञाद्यणि बुधैः फाल्गुनोऽपि प्रकीर्तितः ॥१५६॥

उक्तेष्वर्थेषु नक्षत्रभेदे स्यात्फल्गुनी स्त्रियाम् ।
तद्युक्ता पौर्णमासी तु फाल्गुनी तु भवेदणि ॥ १५७ ॥

१. Pā. IV-1-65. २. Gaṇasūtra under Pā. IV-1-45.

सास्मिन्मासे फाल्गुनिकः फाल्गुनश्च तदर्थकौ ।
विभाषाफाल्गुनीत्येवं ठकि पक्षे णिचः स्मृतेः ॥१५८॥
[1]श्रविष्ठाफल्गुनीत्यादि जातप्रत्ययलुग्विधेः ।
[2]लुक्तद्धितलुकीति स्त्रीप्रत्ययस्याप्यतो लुकि ॥ १५९ ॥
फल्गुनीनक्षत्रजातः फल्गुनः परिकीर्तितः ।
स्त्रियां तु फल्गुनी फल्गुन्यषाढाभ्यां हि टान्विधिः ॥

**अशेर्लशश्च ॥ ३-५७ ॥** लशुनं तु महाकन्दे मध्यतालव्यमिष्यते ।
सूत्रे लसेति दन्त्यान्तादेशपाठस्तु नोज्ज्वलः ॥ १६१ ॥

**अर्जेर्णिलुक् च॥३-५८॥** अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः ।
मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् ॥ १६२ ॥
नपुंसकं नेत्ररोगे गवि स्यादर्जुनी स्त्रियाम् ।
उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित् ॥ १६३ ॥
अर्जुने भक्तिरस्येति भवेदर्जुनको वुनि ॥

**तृणाख्यायां चित्॥३-५९॥** तृणे त्वर्जुनमित्येतदन्तोदात्तं नपुंसकम् ॥ १६४ ॥

**अर्तेश्च ॥ ३-६० ॥** अरुणो व्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ ।
निश्शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ १६५ ॥
अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च ॥

**अजियमिशीङ्भ्यश्च ॥ ३-६१ ॥**
त्रयो धातवः । अजेर्वीभावः ॥
वयुनं देवसदने यमुना तु नदीभिदि ॥ १६६ ॥
बुधैरजगरे पुंसि शयुनः परकीर्तितः ॥

**वृतृवदिहनिकमिकषिभ्यः सः ॥३-६२॥**
षड् धातवः ॥
वर्सं तर्सं [3]तितुत्रेति न ह्यत्र स्यादिडागमः ॥ १६७ ॥
यतः प्रत्ययसंज्ञेयमसिद्धा बहुलोक्तितः ।
न प्रवृत्तं ततः षत्वं कक्षशब्दे तु तद्भवेत् ॥ १६८ ॥

१. Pā. IV-ii-23.
२. Pā. IV-iii-34.
३. Pā. I-ii-49.
४. Vā. IV-iii-34.
५. Pā. VII-ii-9.

आदेश[1]प्रत्ययोरिति सूत्रे भाष्यकैयटाद्युक्तम् ।
एकत्र[एतच्च]सर्वमपरे त्विह षत्वं वर्षतर्षयोराहुः ॥१६९

अयमाशयस्तु तेषां दन्त्ययुतोऽप्यस्तु भाष्यकारोक्त्या ।
बाहुलकबलप्राप्तषत्वाभावश्च पाक्षिको भवतु ॥ १७० ॥

तेन च षत्वे तर्षं वर्षं मूर्धन्यषान्वितं च स्यात् ।
दुर्वारमेतदुभयं यथाकथंचिद्भवेद्वृषितृषिभ्याम् ॥ १७१ ॥

ण्यन्ताभ्यामेरचि वा घञि वा कप्रत्यये घञर्थे वा ।
अच्प्रकरणे भयादेरुपसंख्यानप्रकाशनावसरे ॥ १७२ ॥

आकार एवोदाहृतमस्माद्वर्षं ततश्च तद्ग्राह्यम् ।
तस्माद्द्विरूपतेयं वर्षे तर्षे च साधु फलिताभूत् ॥१७३॥

भारतादिधरण्यंशे जम्बूद्वीपाब्दवृष्टिषु ।
वर्षमस्त्री स्त्रियां भूम्नि वर्षाः प्रावृषि कीर्तिताः ॥१७४॥

प्राग्वतीयेष्विहार्थेषु निर्युक्ता[निर्वृत्ता]दिषु पञ्चसु ।
द्विगोः कालार्थवर्षान्तात् खठञेतल्लुकां विधेः ॥ १७५ ॥

[2]वर्षाल्लुक् चेति सूत्रेण रूपसिद्धिरभूदिति ॥
खप्रत्यये द्विवर्षेण ठञि प्रोक्तो द्विवार्षिकः ॥ १७६ ॥

यतो वृद्धिरियं वर्षस्या[3]भविष्यतिसूत्रतः ।
स्यादुत्तरपदस्यादेर्भविष्यति तु कथ्यते ॥ १७७ ॥

द्वैवर्षिकः पाक्षिके तु द्विवर्षो लुकि सिध्यति ।
नित्यं लुका चिर्त्तवति द्विवर्षः कथितो बुधैः ॥ १७८ ॥

वर्षादितीह निर्देशात्प्रावृडर्थो न गृह्यते ।
प्रावृडर्थात्तु जातादौ [5]वर्षाभ्यष्ठकि वार्षिकः ॥ १७९ ॥

१. Pā. VIII-iii-19.
२. Pā. V-i-88.
३. Pā. VII-iii-16.
४. Pa. IV-i-89.
५. Pā. IV-iii-18.

कौलाट्ठञोऽपवादस्य ऋत्वणो बाधको ह्ययम् ।
तर्षः पूषणि चोत्साहे पिपासालिप्सयोरपि ॥ १८० ॥

अनुतर्षः सुरापानपात्रे तृष्णाभिलाषयोः ॥
पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि ॥ १८१ ॥

मुनिभेदेऽपि वत्सो ना गर्गा[2]दिगणदर्शितः ।
वत्सलस्तु त्रिषु स्निग्धे वत्सांसा[3]भ्यां लजीरणात् ॥

तथा च सूत्रे कामार्थो वत्सशब्द इति ह्यभूत् ।
ष्टरज्वशेन तु स्वल्पे वत्से वत्सतरः स्मृतः ॥ १८३ ॥

षिद्गौरादि[4]भ्यश्च ङीषि स्त्रियां वत्सतरी भवेत् ।
वात्सकं वत्सबृन्दे स्याद्धोगोत्रोक्षेत्यौ[5]दिना वुञि ॥१८४॥

हरेस्तु लाञ्छने पुंसि श्रीवत्सः कथितो बुधैः
हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे ॥ १८५ ॥

योगमन्त्रादिभेदेषु परमात्मनि मत्सरे
निर्लोभनृपतौ भिक्षौ शरीरमरुदन्तरे ॥ १८६ ॥

कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽप्ययं स्मृतः ।
आर्हीयार्थेषु कथितः कंसा[6]ट्टिठनि कंसिकः ॥ १८७ ॥

स्त्रियां तु कंसिकी प्रोक्ता ठिड्[7]ढाणञिति ङीब्वशात् ।
[8]कंसीयपरशव्येन[व्येति] सूत्रादेतद्विभाव्यताम् ॥१८८॥

कक्षा स्यादन्तरीयस्य पश्चादञ्चल[दपि च]पल्लवे ।
स्पर्धायां ना तुदोर्मूलकच्छवीरुत्तृणेषु च ॥ १८९ ॥

अत्र बाहुलकादर्धमासे पक्षः पचेः सतः ।
पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ॥ १९० ॥

१. Pā. IV-iii-11.
२. Pā. IV-i-105.
३. Pā. V-ii-98.
४. Pā. IV-i-41.
५. Pā. IV-ii-39.
६. Pā. V-i-25.
७. Pā. IV-i-15.
८. Pā. IV-iii-168.

स्त्री पक्षतिः पक्षमूले पक्षोत्तिरिति शासनात् ॥

प्लुषेरच्चोपधायाः ३-६३ ॥ प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः ॥ १९१ ॥

पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः । [2]

नेर्दीर्घश्च ॥ ३-६४ ॥ मांसं स्यादामिषे मांसा कक्कोलीजटयोर्मता ॥ १९२ ॥

घञ् ल्युडन्ते पचौ लोपान्मांस्पाको मांस्पचन्यपि ।

पृषोदरादिष्वनयोः सिद्धिरीदृग्विभाव्यताम् ॥ १९३ ॥

अशेर्देवने ॥ ३-६५ ॥ अक्षमिन्द्रियमक्षो ना रथाङ्गव्यवहारयोः ।

पाशके शकटे कर्षे भूतभेदे कलिद्रुमे ॥ १९४ ॥

अक्षेण वाक्ष्णा दीव्यत्यादिष्वर्थेष्वाक्षिकष्ठकि ।

अक्षद्यूतेन निर्वृत्तं स्यादाक्षद्यूतिकं ठकि ॥ १९५ ॥

अक्षे तु कुत्सिते काक्षः स्यात्कापथ्यक्षयोरपि ।

काभावोऽयं बहुव्रीहावक्षिशब्देन वा भवेत् ॥ १९६ ॥

अक्षे धुरः समासान्ते निषेधात्कथिताक्षधूः ।

दृढधूरक्ष इति वा द्वेधा प्यक्षे हि धूरियम् ॥ १९७ ॥

स्नुवृश्चिकृत्यृषिभ्यः कित् ॥ ३-६६ ॥

चत्वारो धातवः ॥

स्नुषा पुत्रस्य भार्यायां स्याद्वृक्षस्तु महीरुहे ।

कृत्स्नं पाथसि नक्षत्रे ऋक्षं स्यादिन्द्रयेऽपि च ॥ १९८ ॥

ऋषेर्जातौ ॥ ३-६७ ॥ ऋक्षोऽद्रिभेदे भल्लूके शोणकेऽपि प्रकीर्तितः ॥

उन्दिगुधिकुषिभ्यश्च ॥ ३-६८ ॥

त्रयो धातवः ॥

उत्सः प्रस्रवणे प्राग्दीव्यतीयेष्वौत्स उच्यते ॥ १९९ ॥

[3]उत्सादिभ्योऽञ्वशाद्गुत्सः स्तबकग्रन्थिपर्णयोः ।

स्तम्बे हारप्रभेदे च सद्वितीययुतोऽप्यसौ ॥ २०० ॥

प्रयुज्यते विपश्चिद्भिकुक्षं तु जठरे स्मृतम् ॥

१. Pā. V ii-15.

२. Both the mss. here add प्लक्षादिभ्योऽनन्[ऽण्] ॥

३. Pā. IV-i-86.

**गृधिपण्यो[ण्यो]र्दकौ च ॥ ३-६९ ॥**

गृत्सस्तु गर्धने दत्वं भष्भावस्य निवृत्तये ॥ २०१ ॥
पक्षो मासार्धके पार्श्वे गृहे साध्यविरोधयोः ।
केशादेः परतो बृन्दे बले सखिसहाययोः ॥ २०२ ॥
चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः ।
पक्षतिः पक्षमूले स्यात्पक्षात्तिरिति सूत्रतः ॥ २०३ ॥
चतुरर्थ्यां वुञ्छणादिफका पाक्षायणः स्मृतः ।
मत्वर्थीयइना पक्षी पाक्षिको हन्ति तं ठकि ॥ २०४ ॥

**अशेः सरः ॥ ३-७० ॥**

अक्षरं त्वपवर्गेऽपि स्यात्परब्रह्मवर्णयोः ।
अशेः सरोऽयं न सरन्मध्योदात्तत्वदर्शनात् ॥ २०५ ॥
अश्नोतेर्वासरो भौष्यं शिष्टानुकरणं वदत् ।
कैयटस्तु नितं प्राहोज्ज्वलदत्तादिसंमतम् ॥ २०६ ॥

**वसेश्च ॥ ३-७१ ॥**

द्विषण्मासात्मके काले वत्सरः परिकीर्तितः ।

**सपूर्वाच्चित् ॥ ३-७२ ॥**

वसेः सपूर्वाच्च सरन्[सरः] स्वरभेदाय चित्कृतः ॥२०७॥
संवत्सरेद्वत्सरादि तत्रोदाहरणं स्मृतम् ।
सांवत्सरं फले पर्वण्यपि संवत्सरादणि ॥ २०८ ॥
जाताद्यर्थेष्वतोऽन्यत्र स्यात्सांवत्सरिकं ठञि ।
प्राग्वतीयेष्विहार्थेषु निर्वृत्तादिषु पञ्चसु ॥ २०९ ॥
राड्यहःसूत्रतः संवत्सरान्तात् खठञो द्विगोः ।
उक्तौ द्विसंवत्सरीणद्विसांवत्सरिकौ क्रमात् ॥ २१० ॥
संख्यायाः संवत्सरस्येत्यादिना वृद्धिरत्र हि ।
ठञ्युत्तरपदस्याचामादेरच उदाहृता ॥ २११ ॥
संवत्सरतमः स स्याद्यः संवत्सरपूरणः ।
नित्यं शतादिमासेति सूत्रेण तमटाडटः ॥ २१२ ॥

१. Pā. V-ii-25.
२. Mahābhāsya, Keilhorn I, 36.
३. Pā. V-i-87.
४. Pā. VII-iii-15.
५. Pā. V-ii-57.

अस्मादेव हि सूत्राड्डट् मासादेः पूरणे स्मृतः ॥

धूमदिभ्यः कित् ॥ ३-७३ ॥

तिलौदने तु कृसरो यवाग्वां कृसरा स्त्रियाम् ॥२१३॥

प्रत्ययावयवस्यापि सस्य बाहुलकान्न षः ।
धूसरी किन्नरीभेदे ना खरे त्रिषु पाण्डरे ॥ २१४ ॥

मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।
मत्सरा मक्षिकायां स्त्री क्रोधेऽपि क्वचिदेष ना ॥२१५॥

वेदे तु यौगिको हर्षहेतावेष निगद्यते ॥

पतेरश्चलः ॥ ३-७४ ॥

पत्सलस्तु पुमान्मार्गे प्रत्याहारे च कथ्यते ॥ २१६ ॥

तन्वृषिभ्यां क्सरन् ॥ ३-७५ ॥

मन्त्रोपकरणे प्रोक्तस्तसरः सूत्रवेष्टने ।
ऋक्षरा तोयधारायामृक्षरः कण्टकर्त्विजोः ॥ २१७ ॥

पीयुकणिभ्यां कालन् ह्रस्वः संप्रसारणं च ॥ ३-७६ ॥

राजादने पियालः स्यात् वृक्षभेदेऽप्यरेफकः ।
यज्ञोपकरणे धान्ये कुणालो देशपक्षिणोः ॥ २१८ ॥

भगालं तु कपाले स्यात् भञ्जेर्बाहुलकादिह ।
नलोपोऽनिदितां सूत्रात्कुत्वं न्यङ्क्वादिपाठतः ॥२१९॥

अस्मादिनिश्चेन्मत्वर्थे भगाली स्यान्महेश्वरे ।

कठिकुषिभ्यां काकुः ॥ ३-७७ ॥

कठाकुर्विहगे शुभ्रे कुषाकुर्नाग्निसूर्ययोः ॥ २२० ॥

स्यात्परोत्तापिनि त्वेष विशेष्याधीनलिङ्गकः ।
धातोर्हि कुषनिष्कर्षे उत्वतो नात्वतः कषेः ॥ २२१ ॥

दन्तकीयात्कोशकारैरुकारप्रक्रमोक्तितः ॥

सर्तेर्दुक्च ॥ ३-७८ ॥

मुट् चेति केचित् ॥[1]

सृदाकुर्नानिले वह्नौ दावाग्नौ प्रतिसूर्यके ॥ २२२ ॥

स्त्रयां सरिति[सर्तेर्मुडिति]मुट्पाठे सृमाकुर्मृग ईरितः ॥

वृतेर्वृद्धिश्च ॥ ३-७९ ॥

वार्ताकुशब्दः पुंसि स्याद्भृङ्गवृक्षस्य वाचकः ॥ २२३ ॥

१. Both the mss. add here the with वत्सलः

२. Pā VI-iv-4.

अत्वे तु प्रत्ययान्तस्य वार्ताकं बहुलोक्तितः ॥

**पर्देर्नित्सं प्रसारणमल्लोपश्च ॥ ३-८० ॥**

पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोरपि ॥ २२४ ॥

**सृयुवचिभ्योऽन्युजागूजक्नुचः ॥ ३-८१ ॥**

सरण्युर्वारिदे वाते शीघ्रगामिन्यपि क्वचित् ।
स्त्रियां यवागूः पक्वान्नशिष्टावस्राविताम्भसि ॥ २२५ ॥

वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत् ।
अयं तपस्विभेदेऽपि विपश्चिद्भिरुदाहृतः ॥ २२६ ॥

**आनकः शीङ्भियः ॥ ३-८२ ॥**

शयानकस्तु विबुधैः पुमानजगरे स्मृतः ।
भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे ॥ २२७ ॥

**आणकलूधूशिङ्घिघाङ्भ्यः ॥ ३-८३॥**

लवाणकं लवित्रे स्यात्समीरे तु धवाणकः ।
शिङ्घाणकः कफे पुंसि क्लीबे नासिकयो[नासायसो]र्मले ॥

डिण्डीरे ना काचपात्रे शिङ्घाणमिति चेष्यते ।
पृषदोरादिपाठेन कलोपोऽत्र विकल्प्यते ॥ २२९ ॥

**उल्मुकदर्वीहोमिनः ॥ ३-८४ ॥**

दीनारभागे विद्वद्भिः धाणकः परिकीर्तितः ।
अलातेन समानार्थमुल्मुकं स्यान्नपुंसकम् ॥ २३० ॥

दर्वी जिते खजाकायां फणायामुरगस्य च ।
उक्तो दर्वीकरः सर्पे कृञो हेत्वादिटे कृते ॥ २३१ ॥

होम्यृत्विजि स्यादिनिना होमादिन्यप्यसौ भवेत् ।
तथापि संज्ञामात्रेऽस्य प्राचुर्यमिह वर्णनात् ॥ २३२ ॥

अतो वा ज्ञायते कृद्भ्यो न भवे[नस्या]दिनिठनोर्विधिः ॥

**ह्रियः कुग्रश्च लो वा ॥ ३-८५ ॥**

कग्रश्चलो वेति केचित् ।
ह्रीकुह्रीकू सलज्जेऽन्यो ह्रीकह्रीकाविहाभ्यधात् ॥२३३॥

**हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥ ३-८६ ॥**

दश धातवः
हस्तः करे करिकरे सप्रकोष्ठकृते करे ।
ऋक्षे केशात्परो व्राते वेः परो व्याकुलार्थकः ॥ २३४ ॥

हस्ते च दीयते कार्यमिति वा हस्त्यमन्यवत् ।
युद्धं प्रवृत्तं हस्ताभ्यामुभाभ्यां यत्प्रहृत्य तत् ॥ २३५ ॥

उभाहस्त्युभयाहस्ति द्विदण्ड्यादिषु दर्शिते ।
हस्ताज्जाताविती[१] नौ तु हस्तीदन्तावले स्मृतः ॥ २३६ ॥

नडादित्वात्फकि[२] भवेत्तद्गोत्रे हास्तिनायनः ।
दाण्डिनायनसूत्रेण[३] भवेदेष निपातनात् ॥ २३७ ॥

हन्तेष्ठकीह हस्तिघ्नः शक्तौ[४] हस्तिकपाटयोः ।
प्रमाणं न्य[णम]स्य चेद्धस्तिद्वयसं हास्तिनं च तत् ॥

पादस्य[५] लोपोऽहस्त्यादिपर्युदासप्रवर्तनात् ।
[हस्तिपादः[६] समासान्तलोपाभावेन सिद्ध्यति ।]
हास्तिकं हस्तिनां बृन्दे हस्तो हस्तर्क्षजे स्मृतः ॥२३९॥

श्रविष्ठाफल्गुनीत्यादेर्जातप्रत्ययलुग्विधेः ।
स्त्रियां तु टापि हस्ताथ मर्तो भूलोकजन्मनोः ॥२४०॥

भूलोकार्थाद्दिगादिभ्यो लुकी[यति] मर्त्यो नरे स्मृतः ।
नञ्समासे त्वनेन स्यादमर्त्यस्त्रिदिवौकसि ॥ २४१ ॥

गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे ।
गर्तोत्तरपदाद्देशवाचिनश्छविधानतः ॥ २४२ ॥

वृकगर्तीयमित्येतज्जाताद्यर्थेषु कथ्यते ।
एतस्तु कर्बुरे पुंसि त्रिषु तद्वति विश्रुत. ॥ २४३ ॥

एतैनीत्युभयं वर्णादनुदात्तादिति स्त्रियाम् ।
ङीप्रत्यये नत्वसन्नियोगशिष्टेऽपि टापि च ॥ २४४ ॥

१. Pā. V-iv-128.
२. Pā. V-ii-133.
३. Pā. IV-i-99.
४. Pā. VI-iv-174.
५. Pā. III-ii-54.
६. Pā. V-iv-138.
७. This ardha is not found in mss. but has been introduced so as to fit in with the previous ardha.
८. Pā. IV-iii-34.
९. Pā. IV-iii-55.
१०. Pā. IV-i-39.

वातः स्यात्पुंसि पवने धातुरोगप्रभेदयोः ।
[1]पाशादिभ्यो य इति ये वात्या वातकदम्बके ॥ २४५ ॥

वातस्य शमनं यच्च कोपनं तत्र वातिकम् ।
संयोगोत्पातयोरस्य निमित्ते ठञ्विधानतः ॥ २४६ ॥

वात[2]दन्तबलेत्यादिसिध्मादिगणसूत्रतः ।
ऊङ्विधानेन वातूलो वातवत्यभिधीयते ॥ २४७ ॥

वातूलो वातनिवहे वातस्यासहनेऽपि च ।
ऊलप्रकरणे [3]वातात्समूहे चेति शासनात् ॥ २४८ ॥

वार्तिकोक्त्या स्मृतो वातमजो वातंधयः खशि ।
मृतावववसिते रम्ये समासावन्त इष्यते ॥ २४९ ॥

अन्ते जाताद्यन्तिमं स्याद[4]न्ताच्चेति डिमज्विधेः ।
[5]अवारपारात्यन्तानुकामं गामीति खश्रुतेः ॥ २५० ॥

अत्यन्तं गामिनि भवेदत्यन्तीनो विशेष्यवत् ।
अन्तगात्यन्तगानन्तगा गमेर्डविधेः स्मृताः ॥ २५१ ॥

[6]दिवाविभेति टे त्वन्तकरोऽनन्तकरस्तथा ।
[7]अनन्तावसथेति ञ्ये स्वार्थ आनन्त्यमुच्यते ॥ २५२ ॥

दन्तोऽद्रिकटके कुञ्जे रदनेऽप्युन्नतोपले ।
वा शसादिष्वदद्भाति[दिषु दद्भावः] [8]पद्दन्नित्यादिसूत्रतः॥

दान्तः कूप इहो[9]दक् च विपाश इति सत्यञौ ।
अर्थे दन्तेन नर्नृत्त[निर्वृत्त]इति नाण्प्रत्ययस्ततः ॥२५४॥

दन्तावलो दन्तशिखात्सं[10]ज्ञायां वलचा द्विपे ।
इनिना तु भवेद्दन्ती दन्त्यो दन्तभवे यता ॥ २५५ ॥

१. Pā. IV.ii.49.
२. Ganasūtra under V-ii-97.
३. Pā. V-ii-121.
४. Vā. IV-iii-23.
५. Pā. V-ii-11.
६. Pā. III-ii-21.
७. Pā. V-iv-23.
८. Pā. VI-i-63.
९. Pā. IV-ii-74.
१०. Pā. V-ii-113.

वीतदन्तबलेत्यादिसिध्मादिगणसूत्रतः ।
ऊङ्विधानेन दन्तूलो दन्तवत्यभिधीयते ॥ २५६ ॥

दन्ता अस्योन्नताः सन्तीत्युरचा दन्तुरः स्मृतः ।
निम्नोन्नते लाक्षणिकः प्रयोगोऽस्यानुमोदकः ॥ २५७ ॥

बहुव्रीहौ तु वयसि दन्तस्य दतृभावतः ।
भवेत्संख्यासुपूर्वस्य द्विदन्निति सुदन्निति ॥ २५८ ॥

षोडन्नुत्वे षषः ष्टुत्वे चादेः परपदस्य च ।
सुदतीत्युगितश्चेति ङीपि स्त्रीत्वे निगद्यते ॥ २५९ ॥

स्याद्द्विदन्तसुदन्तादिर्वयसोऽन्यत्र तत्र तु ।
स्याद्द्विदन्तीसुदन्तीति नासिकोदरसूत्रतः ॥ २६० ॥

अग्रान्तशुद्धशुभ्रेभ्यो वृषादपि वराहतः ।
दन्तस्य दतृभावो वा बहुव्रीहौ प्रकीर्तितः ॥ २६१ ॥

तेन शब्दाः कुड्मलाग्रदन्नित्याद्या हि पाक्षिकाः ।
लोतः पुंसि तु मेषे स्याल्लोतमश्रुणि चोरिते ॥ २६२ ॥

पोतः शिशौ वहित्रे च धूर्तो धुत्तूरभूरुहे ।
शठे च खण्डलवणेऽप्ययं विद्वद्भिरुच्यते ॥ २६३ ॥

तूस्तं बाहुलकादत्र तुसतेः शब्दवाचिनः ।
पापे धूलौ जटायां च दीर्घोऽपि बहुलोक्तितः ॥२६४॥

**नञ्याप इट् च ॥३-८७॥** उक्तो नापितशब्दोऽयं बुधैरन्तेवसायिनि ।
नापित्यं तदपत्ये ण्यप्रत्यये कारिलक्षणे ॥ २६५ ॥

**तनिमृङ्भ्यां किच्च ॥ ३-८८ ॥**
इञः परेण वृद्धत्वात्फिञो वा नापितायनिः ।
ततं व्याप्ते विस्तृते च वाच्यवल्लिङ्गमिष्यते ॥ २६६ ॥

१. Ganasūtra under V-ii-97.
२. Pā. V-ii-106.
३. Pā. V-iv-141.
४. Pā. V-iv.130.
५. Pā. IV-1-6.
६. Pā. IV-1-55.
७. Pā. V-iv-145.

क्लीबं वीणादिके वाद्ये पुंलिङ्गस्तु समीरणे ।
संपूर्वकत्वे सततं संततं चाप्यनारते ॥ २६७ ॥

द्वयमेतदसत्वे स्यात्क्लीबं सत्वे त्रिलिङ्गकम् ।
हिते तते चान्त्यलोपः समो वाक्येन कीर्तितः ॥२६८॥

मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु ।
नञ्पूर्वमेतत्कैवल्ययज्ञशेषसुधाम्बुषु ॥ २६९ ॥

अञ्जिघृसिभ्यः क्तः ॥ ३-८९ ॥

त्रयो धातवः ॥

अक्षिते च परिच्छिन्नेऽप्यक्तमित्यभिधीयते ।
व्यस्तशब्दोचितावर्थावक्तस्य व्याससंकुले ॥ २७० ॥

जगावुज्ज्वलदत्तस्तु विश्वकोशलिपिभ्रमात् ।
घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् ॥ २७१ ॥

सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री ।
बाहुलकाद्दतमुदके दीप्तोञ्छशिलार्चितेषु सत्येऽपि॥२७२

असितो नञ्समासेन नीले ना तद्वति त्रिषु ।
असिता स्त्री न त्वतुल्यशिष्टङीपो निषेधनात् ॥२७३॥

असिक्नी च छन्दसि क्नमेक इत्युक्तिदर्शनात् ॥

दुतनिभ्यां दीर्घश्च ॥ ३-९० ॥

स्यात्सन्देशहरे दूतो दूती गौरादिङीष्वशात् ॥ २७४ ॥

दूतिश्च क्तिचि संज्ञायां दूङो दैवादिकाद्भवेत् ।
दूतशब्दाद्दूत्यदौत्ये कथिते भावकर्मणोः ॥ २७५ ॥

वार्तिकोक्त्या ब्राह्मणादिगणपाठाच्च यण्यञोः ।
तातोऽनुकम्प्ये जनके शीङो बाहुलकादिह ॥ २७६ ॥

शीता नभस्सरिति लाङ्गलपद्धतौ च
प्रोक्ता दशाननरिपोरपि धर्मपत्न्याम् ।
शीतं स्मृतं हिमगुणे च तदन्विते च
शीतोऽलसे च बहुवारतरौ च दृष्टः ॥ २७७ ॥

1. Va. IV-1-39. 2 Va. V-i-126.

षिङ्बन्धन इति त्वस्माद्दीर्घेऽपि बहुलकोक्तितः ।
सीतशब्दो यथायोग्यलिङ्गोऽस्तीति विचिन्त्यताम् ॥

तालव्यादिश्च दन्त्यादिस्तथा च द्विविधोऽप्ययम् ।
धरणीमेदिनीविश्वरभसादिषु दर्शितः ॥ २७९ ॥

शीतोष्णाभ्यां कारिणीति कनि स्याच्छीतकोऽलसे ।
सीतया समिते सीत्यं नौवयैःसूत्रतो यति ॥ २८० ॥

त्रिसीत्याद्याश्च सिध्यन्ति तदन्तविधिसंभवात् ।

जेमूट्चोदात्तः ॥ ३-९१ ॥

जीमूतः स्याद्घृतिकरे[स्याद्वृत्तिकरे]शक्रेऽद्रौ घोषके घने॥
जेमुट् चोदात्त इत्येवं सूत्रमार्षं न मन्वते ।
पृषोदरादिष्वत एवाकरेऽयमुदाहृतः ॥ २८२ ॥

जीवनं सलिलं मूतं बद्धमेतेन यत्ततः ।
जीमूतोऽभूत्पूर्वपदस्यादेशो जी विधीयते ॥ २८३ ॥

अथवान्त्याक्षरयुगं लुप्तं पूर्वपदे भवेत् ॥

लोष्टपलितौ ॥ ३-९२ ॥

पुंनपुंसकयोर्लोष्टो मृत्सङ्घाते निपात्यते ॥ २८४ ॥

पलितं शैलजे तापे केशपाके च कर्दमे ।
कुतिश[क्रियते] येन पलितं पलितंकरणो हि सः ॥

उच्यते करणेऽत्राढ्यसुभगस्थूलसूत्रतः ।
कर्मसूपपदेष्वच्व्यौ च्व्यर्थेष्वेव ख्युनो विधेः ॥ २८६ ॥

पलितंकरणी ङीपि नञ्स्नञीकगिति स्मृतेः ।
कर्तृषूपपदेष्वेषु भुवः खिष्णुच्खुकञ्विधेः ॥ २८७ ॥

एवंविधेषु पलितंभविष्णुरिति कथ्यते ।
पलितं भावुकोऽप्येषां खित्वात् पूर्वपदस्य मुम् ।
पलिता स्त्री न त्वतुल्यशिष्टङीपो निषेधनात् ॥२८८॥

१. Pā. V-ii-72.
२. Pā. IV-iv-91.
३. Pā. III-ii-56.
४. Vā. IV-i-15.

पलिक्की च छन्दसि क्रमेक इत्युक्तिदर्शनात् ।

**हृश्याभ्यामितन्॥३-९३॥** स्याद्दूर्वायान्तु हरिता हरिद्वर्णयुतेऽन्यवत् ॥ २८९ ॥

बहुव्रीहौ तु हरितजम्भा नान्तः प्रकीर्तितः ।
श्येतः पाण्डरवर्णे ना तद्वति स्यादयं त्रिषु ॥ २९० ॥

**रुहे रश्च लो वा ॥३-९४॥** रोहितं रुधिरे क्लीबमृजुशक्रशरासने ।
रोहितो मीनमृगयोर्भेदे रोहितकद्रुमे ॥ २९१ ॥

रोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने ।
पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति ॥ २९२ ॥

रश्च लो वेति सूत्रोक्तेः स्याल्लकारादिकोऽप्ययम् ।
अर्थभेदे व्यवस्थातः प्रयोगोऽस्यावगम्यताम् ॥ २९३ ॥

हरिताद्या गुणे वर्णादनुदात्तादिति स्मृतेः ।
स्त्रीलिङ्गे हरिताश्येतारोहितालोहितेतिवत् ॥ २९४ ॥

भवेयुर्हरिणी श्येनी रोहिणी लोहिनीति च ।
स्वार्थिके लोहितादत्र कनि लोहितको मणौ ॥ २९५ ॥

कोपाद्रक्ते लोहितको वर्णे चानित्य इत्यतः ।
स्त्रियां लोहितिका लोहिनिका वा लिङ्गबाधनात् ॥२९६॥

रक्ते लाक्षादिना लोहितको वा लिङ्गबाधनात् ।
इवार्थेऽस्माल्लोहितीक ईकका कैर्कलोहितात् ॥ २९७ ॥

पूर्गाञ्ञ्योऽग्रामणीपूर्वाल्लोहितध्वज्यसिद्धये ।
तद्राजाञ्यादयस्तेन बहुत्वे लोहितध्वजाः ॥ २९८ ॥

हन्ता रौहितिको मीनमृगभेदार्थकाट्ठकि ।
रोहिणीति भभेदेऽपि तज्जातो रौहिणः पुमान् ॥२९९॥

१. Vā. IV-i-39.
२. Pā. IV-i-39.
३. Pā. V-iv-30.
४. Pā. V-iv-31.
५. Pā. V-iii-110.
६. Pā. V-iii-112.

स्त्रियां जातप्रत्ययस्य लुगुक्त्या रोहिणी भवेत् ।
लुक् तद्धितलुकीति स्त्रीप्रत्ययस्य कृते लुकि ॥ २०० ॥

पिप्पैल्यादिगणे पाठात्पुनरप्यत्र ङीष्विधिः ॥
**शेः किच्च ॥ ३-९५ ॥** मांसे तु पिशितं क्लीबे मांस्यां तु पिशिता स्त्रियाम् ॥२०१॥

**इक्षिस्पृहिगृहिभ्य ाय्यः ॥ ३-९६ ॥** चत्वारो धातवः ॥

श्रवाय्यस्तु स्मृतोऽध्वर्यौ श्रवणीये क्रतौ पशौ ।
दक्षाय्यो गरुडे गृध्रखगे दक्षतरेऽपि च ॥ २०२ ॥

स्पृहयाय्यः सस्पृहे स्यात् गृहयाय्यो गृहाधिपे ।
काथादिकावृदुपधावुभौ स्पृहिगृही इह ॥ २०३ ॥

ऐंयामन्तात्वाय्यसूत्रादयादेशोऽत्र णेः स्मृतः ॥
**देधिषाय्यः ॥ ३-९७ ॥** विचक्षणैः पूजितेऽर्थे दिधिषाय्य इति स्मृतः ॥ २०४ ॥

**वृञ एण्यः ॥ ३-९८ ॥** वरेण्यशब्दः कथितो वरणीयेऽभिधेयवत् ॥
**स्तुवः कसेय्यः ॥३-९९॥** केय्य इति केचित् ॥
स्तुषेय इति विख्यातः तत्र यः स्तुतिमर्हति ॥ २०५ ॥

तत्र केय्यं वदन्तस्तु स्तुवेय्यमुवङा विदुः ।
न तद्बहुमतं वेदतद्भाष्यादिविरोधतः ॥ २०६ ॥

**राजेरन्यः ॥ ३-१०० ॥** राजन्यः पावके राजपुत्रे राजन्यपि स्मृतः ॥
**शॄरम्योश्च ॥ ३-१०१ ॥** शरण्यं गृहरक्षित्रोः स्याद्रमण्यं तु सुन्दरे ॥ २०७ ॥

**अर्तेर्निच्च ॥ ३-१०२ ॥** वने त्वरण्यं महति त्वरण्यानी स्त्रियामिह ।
णे शैषिक इहारण्यो जाताद्यर्थेषु कथ्यते ॥ २०८ ॥

आरण्येति स्त्रियामस्माट्टावदन्तत्वलक्षणः ।
आरण्यको वुञ्यारण्यान्मॅनुष्य इति सूत्रतः ॥ २०९ ॥

१. Pā. I-ii-49.
२. Ganasūtra under IV-i-41.
३. Pā. VI-iv-55.
४. Pā. IV-ii-129.

पैथ्यध्यायन्यायहस्तिविहारेषु मनुष्यवत् ॥

पर्जन्यः ॥ ३-१०३ ॥ पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः ॥ ३१० ॥

वदेरान्यः ॥ ३-१०४ ॥ वदान्यस्तु भवेत्त्यागिन्यपि वाग्मिनि मेघवत् ॥

अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥३-१०५॥ अमत्रं भाजने क्लीबमृक्षे नक्षत्रमुच्यते ॥ ३११ ॥

यत्तु नैभ्राणनपादादिसूत्रे नक्षत्रमीरितम् ।
क्षत्रेण नञ्समासेऽपि व्युत्पत्यन्तरमत्रवत् [मस्तु तत्] ॥

यजत्रो यजमानाग्निहोत्रयष्टव्यदेवते ।
वधेः प्रकृत्यन्तरतो वधत्रं स्मृतमायुधे ॥ ३१३ ॥

पतत्रं वाहने पक्षिपक्षे वर्णे नभस्यपि ॥

गडेरादेश्च कः ॥३-१०६॥ स्त्रीणां श्रोणिप्रदेशेऽपि कुटुम्बिन्यां च न द्वयोः ॥३१४॥

कडत्रं लडयोरैक्यात्कलत्रमपि चेष्यते ॥

वृञश्चित् ॥ ३-१०७ ॥ चर्मरज्जौ तु कथिता वरत्रा विबुधैः स्त्रियाम् ॥ ३१५ ॥

अञि स्याद्बह्वचः कूपेष्विति निर्वृत्तवाचिनि ।
कूपे निगद्यते दैर्घवरत्र इति नाण् ततः ॥ ३१६ ॥

अञा तदर्थं विकृतेः प्रकृतौ चर्मणोऽञिति ।
वरत्राया इदमिति वारत्रं चर्म वार्ध्रवत् ॥ ३१७ ॥

संविदेः कत्रन् ॥३-१०८॥ ज्ञाने कुटुम्बके चैव संविदत्रं नपुंसकम् ॥

कृतेर्नुम् च ॥ ३-१०९ ॥ कृन्तत्रं लाङ्गले छेद्ये छेदने वेष्टनेऽपि च ॥ ३१८ ॥

भृमृदृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतच् ॥ ३-११० ॥ दश धातवः ॥

भरतः शम्बरे रामानुजे भारतवर्षपे ।
दुष्यन्तजे नटे नाट्यशास्त्रकृत्तन्तुवाययोः ॥ ३१९ ॥

भारती तु सरस्वत्यामस्मादेवाणि शैषिके ।
वायौ मृत्यौ च मरतो दर्शतः सोमसूर्ययोः ॥ ३२० ॥

१. Vā. IV-ii-129.
२. Pā. VI-iii-75.
३. Pā. IV ii-73.

दशपाद्यां तु दरतशयतौ यदुदाहृतौ ।
ईशीङ्पाठेन नेङ्यंतन्मन्त्रतद्भाष्यवैकृतात् ॥ ३२१ ॥

यष्टव्ये यजतः प्रोक्तः कृष्णवर्णे च पावके ।
पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः ॥ ३२२ ॥

देवर्षिभेदे शैलेऽपि विपश्चिद्भिरुदाहृतः ।
मत्वर्थीयाद्भवेदेष तत्पर्येत्यपि तद्धितात्[?] ॥ ३२३ ॥

छप्रत्यये पर्वताच्चेत्यनेन सति शैषिके ।
मनुष्यः पर्वतीयः स्याज्जाताद्यर्थेषु विश्रुतः ॥ ३२४ ॥

अमनुष्ये विभाषामनुष्य इत्युक्तसूत्रतः ।
पर्वतीयः पार्वतश्च भवेद्वैभाषिकेऽप्यणि ॥ ३२५ ॥

पार्वत्यपत्येऽञि तस्योपसंख्यानादजातये[?] ।
सति ङीषि भवेद्गौर्यां वह्नौ तु पचतः पुमान् ॥३२६॥

अमतः कालमृत्यौ च रोगेऽपि च निगद्यते ।
तृष्णापरे तु तमतः तृष्णायामपि कथ्यते ॥ ३२७ ॥

ऊर्णाविकारे धूमे च सूर्ये च नमतो नते ।
स्पृहणीये तुरङ्गे च यज्ञे वायौ च हर्यतः ॥ ३२८ ॥

पृषिरञ्जिभ्यां कित् ॥ ३-१११ ॥

पृषतो ना मृगे बिन्दौ त्रिषु सश्वेतबिन्दुके ।
रजतं त्रिषु शुक्ले स्यात्क्लीबे दुर्वर्णहारयोः ॥ ३२९ ॥

खलतिः ॥ ३-११२ ॥

अमुण्डनेऽपि निष्केशे खलतिः पुंसि च स्त्रियाम् ।
सलोपः स्खलतेरित्वं प्रत्ययान्ते निपात्यते ॥ ३३० ॥

कृदिकारादक्तिनः इत्यतो ङीष् वा स्त्रियां भवेत् ॥

शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥ ॥ ३-११३ ॥

वञ्चिस्थाने वन्दिं केचित्पठन्ति ॥

शयथो वाहने व्याधौ मृत्यावपि च पुंस्यसौ ॥३३१॥

१. Pā. IV-ii-143.
२. Ganasūtra under Vā. IV-i-45.
३. Pā. V-iv-23.

निद्रालौ वाच्यलिङ्गोऽथ शपथः शपने पुमान् ।
रवथः कोकिले भीरौ शब्दनेऽपि च कथ्यते ॥ ३३२ ॥

गमथः पथिके प्रोक्तो वर्त्मन्यप्येष दृश्यते ।
वञ्चथः कोकिले काले धूर्तेऽपि परिकीर्तितः ॥ ३३३ ॥

वन्दथो वञ्चथस्थाने स्तुत्यस्तोत्रोऽपरैः स्मृतः ।
जीवथो धर्मशशिनोरायुष्मति च कथ्यते ॥ ३३४ ॥

बलिनि ग्रामनिचये प्राणथः स्यात्प्रजापतौ ।
आहुः शमिदमिभ्यामप्यथं बाहुलकादिह ॥ ३३५ ॥

शमथः सचिवे शान्तौ दमथो दमदण्डयोः ॥

**भृञश्चित् ॥ ३-११३ ॥** भरथः पावके पुंसि लोकपालेऽपि कथ्यते ॥ ३३६ ॥

**रुदिविदिभ्यां ङित् ॥ ३-११४ ॥** "रुदिविदिभ्यां कित्" इति केचित् ॥

शिशौ तु रुदथो योगिकृतिनोर्विदथः स्मृतः ।
रुविदिभ्यां किदित्यन्यो रुवथं कुक्कुटेऽब्रवीत् ॥ ३३७ ॥

**उपसर्गे वसेः ॥ ३-११५ ॥** वेश्मन्यावसथः पुंसि भवेत्क्षपणकेऽपि च ।
अनन्तावसथेति ज्ये त्वावसथ्यमपि स्मृतम् ॥ ३३८ ॥

वसत्यावसथे योऽसौ स्यादावसथिकः छलि ।
छलः षित्वादिह स्त्रीत्वे ङीष्यावसथिकी स्त्रियाम् ॥ ३३९ ॥

स्यादग्नौ तूपवसथस्तोमे संवसथः स्मृतः ।
उपसर्गे वसेरेवमथप्रत्यय ऊह्यताम् ॥ ३४० ॥

पाठभेदो बहुविधः शीङ्शपीत्याद्यनन्तरम् ।
दशपाद्यादिषु तथाप्यसौ नाकरसंमतः ॥ ३४१ ॥

**अत्यविचमितमिनमिरभिलभिनभितपिपतिपणिपनिमहिभ्योऽसच् ॥ ॥ ३-११६ ॥** त्रयोदश धातवः । "अत्यमिचमितमिरभिनभितपिपणिपनिभ्योऽसच्" इति केचित् । तन्मते नव धातवः ॥

१. Pā. IV-i-41.

बाष्वायुधात्मस्वतसः स्त्र्युमायामतसी स्मृता ।
गौरादित्वेन ङीषत्र विपश्चिद्भिर्विबुध्यताम् ॥ ३४२ ॥

अवसो राज्ञि सूर्ये च स्थानेऽप्याहुर्जलेऽवसम् ।
नार्के न स्त्री यज्ञपात्रे चमसः पिटकेऽस्त्रियाम् ॥३४३॥

तमसः पुंसि कूपे च व्यवसाये च कथ्यते ।
ध्वान्ते तु तमसं क्लीबं तमसा सरिति स्त्रियाम् ॥३४४॥

अनुकूले तु नमसो रभसो वेगहर्षयोः ।
लभसो याचके वित्ते नभसोऽब्धिविहायसोः ॥ ३४५ ॥

तपसो विहगे चन्द्रे हरिदश्वे च कथ्यते ।
पतसः स्यात्खगे पण्यद्रव्ये तु पणसः स्मृतः ॥ ३४६ ॥

पनसः कण्टकिफले कटके वानरान्तरे ।
स्त्रियां रोगप्रभेदे स्यान्महसं भाजने स्मृतम् ॥ ३४७ ॥

वेञस्तुट् च ॥ ३-११७ ॥ "वियस्तुट् च" इति केचित्पठन्ति ॥

वेतसः पुंसि वानीरे जातवेदस्यपि स्मृतः ।
वेतस्वानत्र कुमुदनडेत्यादिड्मतुब्वशात् ॥ ३४८ ॥

टिलोपे डित्वसामर्थ्यादभत्वेऽपि भवेदिह ।
वेञस्तु[स्तुट् च]वियस्तुट्चेत्यत्र सूत्रं द्विधोच्यते ॥३४९॥

आद्ये वेञ् तन्तुसन्ताने वी गत्यादिष्वनन्तरे ।
वियस्तुट् चेति पाठस्तु दशपाद्यां समाश्रितः ॥ ३५० ॥

यथाकथंचिद्रूपस्य निष्पत्तिर्नैव हीयते ।
असच्यस्मिन् बाहुलकाद्धान्ये यवस ईरितः ॥ ३५१ ॥

वहियुभ्यां णित् ॥३-११८॥

बलीवर्देऽप्यजगरे वीतिहोत्रे च वाहसः ।
यावसस्तृणसङ्घाते घासेऽप्यन्ने च कथ्यते ॥ ३५२ ॥

1. Pā. IV-i-41. 2. Pā. IV-ii-87.

वयश्च ॥ ३-११९ ॥ वायसस्तु विपश्चिद्भिः चिरजीविनि कथ्यते ।
वेद वायसविद्यां वाधीते वायसविद्यिकः ॥ ३५३ ॥

विद्यालक्षणकल्पान्ताद्वार्तिके ठग्विधानतः ॥[1]
"वयो णित्" "वहियुभ्यां च" इति न्यासभेदेन केचित्पठन्ति ॥

दिवेः किच्च॥ ३-१२० ॥ दिवसो वासरे पुंसि क्लीबे च परिकीर्तितः ॥ ३५४ ॥

कृशृशलिकलिगर्दिभ्योऽभच् ॥ ३-१२१ ॥ पञ्च धातवः ॥

करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते ।
शरभोऽष्टापदे कीशभेदेऽपि च मृगान्तरे ॥ ३५५ ॥

शलभस्तु पतङ्गाख्ये करभे करिशावके ।
गर्दभः श्वेतकुमुदे गण्डभेदेऽपि रासभे ॥ ३५६ ॥

क्षुद्रजन्तुप्रभेदेऽपि रोगभेदेऽपि कथ्यते ॥
ऋषिवृषिभ्यां कित् ॥ ३-१२२ ॥ ऋषभः स्वरभेदे स्यात् अष्टवर्गौषधे वृषे ॥ ३५७ ॥

श्रेष्ठार्थे च वराहस्य पुच्छे रन्ध्रे च कर्णयोः ।
ऋषभी शूकशिम्ब्यां च नराकारस्त्रियामपि ॥ ३५८ ॥

विधवायां निराशायामपि विद्वद्भिरुच्यते ।
ऋषभाय हिते तु स्यादार्षभ्यो ञ्यविधानतः ॥ ३५९ ॥

भवेदत्रर्षभतरस्तनुत्वे ष्टरचो विधेः ।
वृषभः पुरुषश्रेष्ठे वृषेऽपि परिकीर्तितः ॥ ३६० ॥

रुषेः नित्लुष् च ॥ ३-१२३ ॥ गन्धहस्तिनि हिंस्रे च लुषभः परिकीर्तितः ॥
रासिवल्लिभ्यां च ॥ ३-१२४ ॥ रासभस्तु प्रकथितः चक्रीवति विशारदैः ॥ ३६१ ॥

वल्लभो दयितेऽध्यक्षे सुलक्षणतुरङ्गमे ॥
जॄविशिभ्यां झच् ॥ ३-१२५ ॥ भूतग्रामे च महिषे जरन्तः पुंसि कथ्यते ॥ ३६२ ॥

1. Vā. IV-ii-60.

वेशन्तस्त्वपरिप्राप्तापवर्गे पल्वलेऽपि च ।
स्यादर्हन्तो बाहुलकादिह क्षपणके जिने ॥ ३६३ ॥

रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ ३-१२६ ॥

चत्वारो धातवः ॥

रोहन्तो वृक्षभेदे ना रोहन्ती वीरुधि स्त्रियाम् ।
नन्दन्तस्तनये सख्यौ नन्दन्त्यौ तु सखीसुते ॥ ३६४ ॥

जीवन्तः स्यादृषौ पुंसि जीवन्तीत्योषधौ स्त्रियाम् ।
प्राणान्तः पवने वाते प्राणन्तीत्यौषधौ स्त्रियाम् ॥३६५॥

रोहन्त्यादिषु षित्वेन स्त्रीत्वे ङीषिह बुध्यताम् ॥

तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥ ३-१२७ ॥

तरन्तः सागरेऽर्के ना तरन्ती नावि कथ्यते ॥ ३६६ ॥

भवन्तः पुंसि काले स्यात् भवन्ती भवनान्तरे ।
वहन्तो वृषभे वायौ रथे च परिकीर्तितः ॥ ३६७ ॥

वसन्तः पुष्पसमये भवेद्वासन्तिकः छकि ।
गौणादध्येतृवेदित्रोः भासन्तो....[भासुरा]र्कयोः ॥३६८॥

साधन्तः स्यात्परिव्राजि गडयन्तोऽभ्रयन्त्रयोः ।
घटादित्वान्मितां ह्रस्वे णेरयादेशतो ह्ययम् ॥ ३६९ ॥

अयादेशे मण्डयन्तो नन्दयन्तेति पूर्ववत् ।
अलङ्कारे नटे चैव मण्डयन्तो निगद्यते ॥ ३७० ॥

जयन्तः शक्रसूनौ ना जयन्ती त्वोषधौ तथा ।
स्यान्नन्दके नन्दयन्तो नन्दिर्ण्यन्तोऽत्र गृह्यते ॥३७१॥

अन्ये वसिवहीत्येवं विपर्यासं बभाषिरे ।
साधयन्त इति त्वाहुः साधेर्ण्यन्तत्ववाचिनः ॥ ३७२ ॥

कश्चित्वनाशीरर्थेऽपि नन्दन्तमिह वर्णयन् ।
आशिषीत्यनुवृत्तिं च कुर्वन् स्वोक्त्या विरुध्यते ॥३७३॥

हन्तेर्मुट् च हि च ॥ ३-१२८ ॥

हिमागमे तु विबुधैः हेमन्त इति कथ्यते ।
सर्वत्राण्च तलोपश्चेत्युक्तेर्जातादिहैमनम् ॥ ३७४ ॥

पक्षे चादृत्वणि त्वत्र हैमन्तमपि कथ्यते ॥

**भन्देर्नलोपश्च॥३-१२९॥** भदन्तः स्यात्क्षपणके चिह्ने तु विबुधैः स्मृतः ॥ ३७५॥

**ऋच्छेररः ॥ ३-१३० ॥** ऋच्छरा गणिकायां स्त्री त्वरायामपि कथ्यते ।
जर्जराद्या इहान्येऽपि विज्ञेया बहुलोक्तितः ॥ ३७६ ॥
जर्जरं शैवले क्लीबं पुरुहूतध्वजेऽपि च ।
झर्झरं स्यात्कलियुगे वाद्यभेदे नदान्तरे ॥ ३७७ ॥
मन्थरः सूचके कूपे मन्दगामिनि चेति दिक् ॥

**अर्तिकमिभ्रमिचमिदिविवासिभ्यश्चित् ॥ ३-१३१ ॥** षड् धातवः । वाशीति तालव्यवानित्यपरे ॥
छदे कवाटेऽप्यररं सोमे लोहे च पुंस्ययम् ॥ ३७८ ॥
कमरः कोमले बाले कामुकेऽपि प्रकीर्तितः ।
भ्रमरः कामुके भृङ्गे स्यादप्येष मधुद्रवे ॥ ३७९ ॥
संज्ञायामित्यणि....[भवेत्] भ्रामरं भ्रमरैः कृतम् ।
चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः ॥ ३८० ॥
चामरं तु स्याद्विकारेऽवयवे वा प्रकीर्णके ।
देवरस्तु बुधैर्भर्तुः कनिष्ठभ्रातरि स्मृतः ॥ ३८१ ॥
वासरो दिवसे रागे वस्त्रभेदे हुताशने ।
अयं तु वसतेर्ण्यन्ताद्बदितो दन्त्यमध्यमः ॥ ३८२ ॥
केचिद्वाशीति तालव्यं पठित्वा शब्दवाचिनः ।
वाश्यतेर्वाशरं प्राहुः कोकिलज्वलनार्थकम् ॥ ३८३ ॥

**कुवः क्ररन् ॥ ३-१३२ ॥** कुररः कथितो धीरैः उत्क्रोशाख्ये विहङ्गमे ॥

**अङ्गिमदिमन्दिभ्य आरन् ॥ ३-१३३ ॥** त्रयो धातवः ॥
अङ्गार उल्मुके न स्त्री पुंलिङ्गस्तु महीसुते ॥ ३८४ ॥
वराहे पानशौण्डे च मदारो न द्वयोर्मणौ ।
ईदिद्दैवादिको हर्षार्थको नास्यनुमस्त्यतः ॥३८५॥

1. Pā. IV-iii-117.

मन्दारस्तु भवेन्मन्देः स्तुत्याद्यर्थान्नुमन्वितः ।
पारिभद्रेऽर्कपर्णे च सुरद्रौ हस्तिधूर्तयोः ॥ ३८६ ॥
धातोरस्माद्बाहुलकाद्दारौ मन्दारुरित्यपि ।
पारिभद्रतरौ कश्चिच्छब्दः शब्दार्णवे स्थितः ॥३८७॥

**गडेः कड च ॥३-१३४॥** कडारः कपिले दासे निस्सारोत्पलमूलयोः ॥

**शृङ्गारभृङ्गारौ॥३-१३५॥** शृङ्गारस्सुरते नाट्ये····[रसे च गज]मण्डने ॥ ३८८ ॥
नपुंसकं लवङ्गेऽपि नागसंभवचूर्णयोः ।
भृङ्गारी झिल्लिकायां स्त्री कनकालौ पुमानसौ ॥३८९॥

**कञ्जिमृजिभ्यां चित् ॥ ३-१३६ ॥** कञ्जारो जठरार्केभमयूरमुनिधातृषु ।
कञ्जिधातुरसौ सौत्र इति धीरैर्विमृश्यताम् ॥ ३९० ॥
मार्जारस्तु बिडाले स्यात्खट्वाङ्गेऽप्येष विश्रुतः ॥

**कमेः किदुच्चोपधायाः ॥ ३-१३७ ॥** कुमारो बालके स्कन्दे युवराजेऽश्ववारके ॥ ३९१ ॥
शुकेऽपि वारणाद्रौ च कुमारं जात्यकाञ्चने ।
कुमारी रामतरणीवनकाल्योर्नदीभिदि ॥ ३९२ ॥
कन्यापराजितागौरीजम्बूद्वीपेषु कीर्तिता ।
कौमारापूर्ववचने प्राप्ते इति निपातनात्[2] ॥ ३९३ ॥

**तुषारादयश्च ॥३-१३८॥** तुषारो हिमभेदे च शीकरे शिशिरे हिमे ।
कासारस्तु सरस्यां स्यात्सहकारस्तु चूतके ॥ ३९४ ॥
अत्र बाहुलकादेष सहतेरकगागमः ॥
दीनारस्तु भवेन्निष्के सुवर्णाभरणेऽपि च ॥ ३९५ ॥
दीङो सुडागमोऽप्यत्र ज्ञेयो बाहुलकाद्बुधैः ॥

**सर्तेरपः षुक् च॥३-१३९॥** सर्षपो विबुधैर्धान्यविशेषे परिकीर्तितः ॥ ३९६ ॥

**उषिकुटिदलिकचिखजिभ्यः कपन् ॥३-१४०॥** पञ्च धातवः ॥
उषपो दहने सूर्ये माने तु कुटपः पुमान् ।
मुखत्राणे प्रहरणेऽप्युच्यते दलपो बुधैः ॥ ३९७ ॥

1. Pā. IV-ii-13.
2. The text is not complete here. An ardha is probably missing.

कच्चपः शाकपत्रे स्यात्तथा शाकुनिकेऽप्यसौ ।
खजपं दधनि प्रोक्तं घृतेऽपि च विचक्षणैः ॥ ३९८ ॥

**कणेः संप्रसारणं च ॥ ३-१४१ ॥**

कुणपः पूतिगन्धे च शवे च परिकीर्तितः ।
कौणपो राक्षसे प्रोक्तः शैषिकेऽणि विशारदैः ॥ ३९९ ॥

**कपश्चाक्रवर्मणस्य ॥ १४२ ॥**

स्वरार्थं तु कपश्चाक्रवर्मणस्येति सूत्रितम् ॥

**विटपविष्टपविशिपोलपाः ॥ ३-१४३ ॥**

चत्वारः शब्दाः । "विटपविष्टप[पिष्टप]विशिपोलपाः" इति केचित्पेठुः ॥
विटपो न स्त्रियां स्तम्बे शाखाविस्तारपल्लवे ॥ ४०० ॥
मत्वर्थीये तु विटपी भूरुहे परिकीर्तितः ॥
विष्टपं भुवने प्राहुः केचिदोष्ठ्यचरादिकम् ॥ ४०१ ॥
दन्तोष्ठ्यादिकमन्ये तु पन्थाः प्रामाणिको ह्ययम् ।
विशिपं वेश्मनि प्रोक्तमुलपो ना तृणान्तरे ॥ ४०२ ॥
गुल्मिन्यां न स्त्रियामेष स्यादपाने तु न द्वयोः ॥
बहुलोक्तेर्मण्डपोऽस्त्री मण्डेर्वेष्टनवाचिनः ॥ ४०३ ॥
विटपान्मण्डपोऽप्युक्तो दशपादीनिरूपणे ॥

**वृतेस्तिकन् ॥ ३-१४४॥**

दीपार्चिर्द्रव्यगुडिकापक्षिजातिषु वर्तिका ॥ ४०४ ॥

**कृतिभिदिलतिभ्यः कित् ॥ ३-१४५ ॥**

कृत्तिका तारकाभेदे चर्मण्यपि निगद्यते ।
पौर्णमासी कृत्तिकया युक्ता कार्तिक्युदाहृता ॥ ४०५ ॥
मासे सा यत्र तत्रोक्तौ द्वौ कार्तिकिककार्तिकौ ।
विभाषा फाल्गुनीत्यादिठकि पक्षेऽणि च स्मृते ॥
भित्तिका वाहिनीभित्त्योः स्याद्गोधायां तु लत्तिका ॥

**इष्यशिभ्यां तकन् ॥ ३-१४६ ॥**

इष्टका मृद्विकारे स्यात्प्रासादाद्युपयोगिनि ॥ ४०७ ॥
इत्वं नेहेष्टकेषीकासूत्रमध्ये निपातनात् ।
अत एवेष्टकचिते सूत्राद्ध्रस्वोऽवगम्यताम् ॥ ४०८ ॥

1. Pā. IV-ii-23.  2. Pā. VI-iii-65.

पक्वेष्टकचितेऽप्येवं तदन्तविधिसंभवात् ।
अैष्टकापितृदेवत्यतिथावित्वं न शासनात् ॥ ४०९ ॥

इणस्तशंस्तशसुनौ ॥ ३-१४७ ॥
एतशश्चैतशाश्च द्वावेतौ ब्राह्मणवाचकौ ।
अदन्तः प्रथमस्सान्तः द्वितीयश्चेति तत्स्थितिः ॥४१०॥

वीपतिभ्यां तनन् ॥ ३-१४८ ॥
वी गत्यादौ ॥
स्याद्वेतनं भृतौ क्लीबे यस्तु तेनोपजीवति ।
ठकि वैतनिकस्तत्र पत्तनं पुटभेदने ॥ ४११ ॥

दृदलिभ्यां भः ॥३-१४९॥ दर्भः काशकुशाद्येषु दल्भः स्यादृषिचैक्रयोः ॥

अर्तिगृभ्यां भन् ॥३-१५०॥ अर्भशब्दस्तु कथितः पुंलिङ्गो बालके बुधैः ॥ ४१२ ॥
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ।
मत्वर्थीय इनावस्मात्तद्वत्यां गर्भिणी स्त्रियाम् ॥ ४१३ ॥
गार्भिणं तत्समूहे स्याद्भिक्षादिभ्योऽणिति स्मृतेः ।

इणः कित् ॥ ३-१५१ ॥ अनेकपे तु विबुधैरिभः पुंसि निगद्यते ॥ ४१४ ॥
आड्ये तर्दर्हतीत्यर्थे स्यादिभ्यो दण्डयवद्यति ॥

असिसञ्जिभ्यां क्थिन् ॥ ३-१५२ ॥
कीकसे न द्वयोरस्थि स्यादूरौ सक्थि न द्वयोः ॥ ४१५ ॥
उत्तरमृगोपमानात्तत्पुरुषे टज्विधानतः सक्थ्नः ।
स्यादुत्तरसक्थं मृगसक्थमथोफलकसक्थमिति ॥
यत्स्वाङ्गवाचि विदितं सक्थितदन्ताद्बहुव्रीहेः ।
षच्प्रत्ययेन हि बहुव्रीहौ सक्थीति दीर्घसक्थः स्यात् ॥
नञ्दुःसुभ्यः परतो यत्सक्थि तदन्ततो बहुव्रीहेः ।
अचि वासक्थोऽसक्थी स्यातां दुःसक्थदुःसक्थी ॥
किंच सुसक्थसुसक्थी नञ्दुःसुभ्यो हलीति सूत्रेण ।
हलि सक्थ्योरिति पाठो हलिशक्त्योरिति च तत्र हि द्वैधम् ॥ ४१९ ॥

१. Vā. VII-iii-45.
२. Another reading noted in the ms. is ऋषिवल्कलयोः
४. Pā. V-i-63.
५. Pā. V-iv-113.
६. Pā. V-iv-121.

टादावच्यनङादेशभाविनी अस्थिसक्थिनी ॥

**प्लुषिशुषिकुषिभ्यः क्सिः ॥ ३-१५३ ॥** प्लुक्षिर्जलेऽग्नावशनौ शुक्षिर्वायौ च तेजसि ॥ ४२० ॥

कुक्षिशब्दस्तु जठरे पुंलिङ्गः परिकीर्तितः ।
शारिकुक्षो बहुव्रीहौ सुप्रातेति[1] निपातनात् ॥ ४२१ ॥

कुलकुक्षीति[2] ढकञि खड्गे कौक्षेयकः पुमान् ।
धूमादित्वेन[3] जातादिष्वर्थेषु वुञि कौक्षकः ॥ ४२२ ॥

भवार्थे दृतिकुक्षीति[4] कौक्षेयो ढञि कथ्यते ॥

**अक्ष्णोर्नित् ॥ ३-१५४ ॥** अक्षि चक्षुष्यनङ् भाविटादावचि निगद्यते ॥ ४२३ ॥

पङ्कजाक्षी बहुव्रीहौ सक्थ्यक्ष्णोरिति[5] षज्वशात् ।
अक्ष्यन्तादव्ययीभावे टच्प्रत्ययविधौ सति ॥ ४२४ ॥

प्रत्यक्षादिः प्रतिपरसमनुभ्योऽक्ष्ण इत्यतः ।
निपातनात्परोक्षे[6] लिडिति सूत्रकृता स्वयम् ॥ ४२५ ॥

परोक्षमिति पूर्वान्तस्यौकारादेश इष्यते ।
त्रिपदात्तु बहुव्रीहौ षजन्तादषडक्षतः ॥ ४२६ ॥

स्वार्थिके खेऽषडक्षीणमषडक्षीशितङ्गिवति ।
अच्प्रत्ययोद[त्यये ग]वाक्षादि स्यादक्ष्णोऽदर्शनादिति ॥

**इषेः क्सुः ॥ ३-१५५ ॥** रसालाख्यौषधाविक्षुः स्याद्गुडप्रकृतौ पुमान् ।
क्षेत्रेऽमीषां भवेदिक्षुशाकटं चेक्षुशाकिनम् ॥ ४२८ ॥

**अवितृस्तृतन्त्रिभ्य ईः ॥ ३-१५६ ॥** चत्वारो धातवः ॥

रजस्वलायां स्त्रीत्वे स्यादवीः पुंसि पशौ स्मृतः ।
तरीर्ना मारुते वह्नौ स्त्री पेटी नौ दशासु च ॥ ४२९ ॥

1. Pā. V-iv-120.
2. Pā. IV-ii-96.
3. Pā. IV-ii-127.
4. Pā. IV-iii-56.
5. Pā. V-iv-113.
6. Ganasūtra under V-iv-107.
7. Pā. III-ii-115.
8. Pā. V-iv-7.

स्तरीर्धूमे घने तन्त्रीर्धमन्यां वल्लरीगुणे ।
नाडीतन्त्र्योः स्वाङ्ग इति बहुव्रीहौ न कप् ततः ॥

वीणा हि बहुतन्त्रीका बहुतन्त्रीस्तु कन्धरा ॥

यापोःकिद्द्वेच॥३-१५७॥ययीरश्वे च मार्गे च दोर्धयष्ट्यग्रजन्मनोः ॥ ४३१ ॥

पपीस्तु कथितो हस्तिन्यादित्ये च हिमद्युतौ ।

लक्षेर्मुट् च ॥ ३-१५८ ॥ मुक्चेति केचित् ॥
लक्ष्मीस्त्रिवर्गसंपत्तिशोभापद्मासु कथ्यते ॥ ४३२ ॥

स्यादेकवचनान्तोऽयमुरःप्रभृतिषु श्रित· ।
बहुव्रीहेर्वा द्विबहु वचनान्तादतोऽत्र कप् ॥ ४३३ ॥

**इति श्रीधरवंशयेन रचिते पेरुशास्त्रिणा ।**
**तृतीयपादः पूर्णोऽयमौणादिकपदार्णवे ॥**



१. Pā. V-iv-159. २. Pā V-iv-151.

# अथ चतुर्थः पादः ॥

**वातप्रमीः ॥ ४—१ ॥**

वातप्रमीर्वातमृगे शमीवृक्षे हयेऽपि च ।
स्त्रीपुंसयोरयं स्त्रीत्वे ङीषप्यस्यादिकः परः ॥ १ ॥

कृदिकारादिति भवेदिति केचन मन्वते ।
कारप्रत्ययसम्बन्धस्तत्कालस्यैव बोधकः ॥ २ ॥

इतिनैव मुनित्रय्योपदिष्टमिति तन्मतम् ।
वातप्रमीश्रीलक्ष्मीति पक्षेऽङ्यन्तात्सुसाधका·[धवः] ॥

इति रक्षितवाग्वृत्तिरप्यत्रार्थेऽनुसारिणी ।
आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रियाम् ॥ ४ ॥

इति द्विरूपकोशोक्तिरप्यत्रोदाहृतिक्षमा ।
तेनाशीविषशब्दोऽपि साधु...[सं]गच्छत[ते]तराम् ।

आशीःशब्दः सकारान्तोऽप्यस्ति सर्वत्र संमतः ॥ ५ ॥

**ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कनिज्यतुजलिजिष्टुजिष्ठजिसन्यस्यनिथिन्नुल्यसासानुकः ॥ ४-२ ॥**

द्वादश धातवः । अत्र प्रत्ययेषु मतभेदात् सूत्रपाठभेदः । आद्यस्य निरनुबन्धकस्य पाठादात्मी[दत्नी]यतुजित्यादि । इष्ठचः स्थाने इष्णुच् पठ्यते । इनूस्थाने इशन् । इथिनूस्थाने इथिः । उल्यनन्तरं असस्यस्थाने अचः अषो वा । तदनन्तरस्य आस इति दीर्घादिः, अस इति ह्रस्वादिर्वा । उभयथापि न सन्धिविशेषः । तथा च “ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्योऽक्नियतुजलिजिष्टुजिष्णुजिशनूस्यन्मिथ्युल्यचासानुकः अषासानुक इति वा ॥

रत्निः करे बद्धमुष्टौ दशपाद्यां त्वसावकित् ।
अरत्निशब्दस्तु तथा स्यात्करे प्रसृताङ्गुलौ ॥ ६ ॥

एवं कतिपये धीराः कूर्परेऽपि प्रयुञ्जते ।
प्रागुक्तरीत्या तु नञा समासे सिध्यतीदृशः ॥ ७ ॥

1. Ganasūtra under IV-1-45.

तन्यतुर्घनवार्ताकरात्रिष्वशनिशब्दयोः ।
अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च ॥ ८ ॥

द्विगावतद्धितलुकि द्व्यञ्जलिस्त्र्यञ्जलीतिवत् ।
द्व्यञ्जलं त्र्यञ्जलमिति स्याद्विकल्पेन टज्विधेः ॥ ९ ॥

अञ्जलिः सर्ववन्द्यत्वात्सतत्नस्मिन्निति स्मृतः ।
शकन्ध्वादिषु पाठेन गोनर्दीयः पतञ्जलिः ॥ १० ॥

स्थविरान्त्रे वनिष्टु स्यात् द्विपा सदृशचर्मणि ।
अग्निष्ठो दहने भानौ सलिलेऽपि च सर्पिषि ॥ ११ ॥

अत्रार्थेऽग्निष्णुरित्येवमिष्णुच्पाठे प्रसिध्यति ।
अग्रमांसेऽर्पिसो दन्त्यसान्वितः प्रत्ययो ह्ययम् ॥ १२ ॥

तालव्यशं वदन्तोऽन्ये स्वाहुर्ग्रामार्द्रमांसयोः ।
मीने मत्स्यो द्वयोर्देशभेदे पुंभूम्नि कथ्यते ॥ १३ ॥

स्त्रियां मत्सीति मत्स्यस्य ङ्यां यलोपविधानतः ।
पक्षिमत्स्येति सूत्रोक्तेर्मात्स्यिको मत्स्यहन्तरि ॥ १४ ॥

अतिथिः कुशपत्रे स्यात्पुमानागन्तुके त्रिषु ।
नञ्बहुव्रीहिरूपेण स्मृतिष्वेष प्रसाधितः ॥ १५ ॥

यदा पृषोदरादित्वादकारो लुप्यते तदा ।
तिथिशब्दो भवेदेष द्वयोः प्रतिपदादिषु ॥ १६ ॥

स्यादातिथ्यमतिथ्यर्थेऽतिथेर्ञ्य इति सूत्रतः ।
अतिथौ साध्वातिथेयं स्यात्पथ्यतिथिसूत्रतः ॥ १७ ॥

अङ्गुलिः करशाखायां कर्णिकायां गजस्य च ।
अस्य तत्पुरुषे संख्याव्ययादेर्ङीव्वि[दिष्टज्वि]धानतः ॥

१. Vārtika under I-i-64.
२. Pā IV-iv-35.
३. Pā. V-iv-26.
४. Pā. IV-iv-104.
५. Pā. IV-i-26.

ज्ञेयमेकाङ्गुलं दारु निरङ्गुलमिति क्रमात् ।
दारुण्येव बहुव्रीहौ षचि पञ्चाङ्गुलं स्मृतम् ॥ १९ ॥

अङ्गुलीयं तत्र भवेज्जिह्वामूलाङ्गुलेश्छतः ।
मनुष्यनामतष्ठच्चेत्स्यात् षडङ्गुलिदत्तकः ॥ २० ॥

ठाजादिवचनाल्लोपे षडिकः परिकीर्तितः ।
कवसः कोकिले काले अचमाहुरिहापरे ॥ २१ ॥

कवचो गर्दभाण्डे च सन्नाहे पर्पटेऽपि च ।
मत्वर्थीय इनावस्मात्कवची वर्मिणि स्मृतः ॥ २२ ॥

ठञ्विधानात् कवचिनां गणे कावचिकं भवेत् ।
मूर्धन्यषान्वितमपं वदन्ति कतिचित्तदा ॥ २३ ॥

कवषः क्रोधने शब्दकारेऽपि परिकीर्तितः ।
भवेद्यवासः कार्पासे धन्वयासौषधावपि ॥ २४ ॥

ह्रस्वादौ प्रत्यये केचित्तृणे यवसमूचिरे ।
असच्प्रकरणे बाहुलकादेष निरूपितः ॥ २५ ॥

कृशानुः स्यात्पुमान् वह्नावादित्येऽपि च विश्रुतः ॥
अः करन् ॥ ४-३ ॥ शर्करा खण्डविकृतावुपलाकर्परांशयोः ॥ २६ ॥

रोगभेदेऽपि शकले स्त्रियां विद्वद्भिरुच्यते ।
शर्करायां वेति चातुरर्थिकस्यात्र वा लुपि ॥ २७ ॥

वोक्तिसामर्थ्यलब्धाणः पक्षे च श्रवणे सति ।
ठक्षयोरक्र[ ठक्चयोरपि ठक् ]छौ
चेत्येतैत्सूत्रोक्तयोः सतोः ॥ २८ ॥

कुमुदादौ वराहादौ पाठात्पक्षे च ठच्ककोः ।
शर्करा शार्करं शार्करिकं च विबुधैः स्मृतम् ॥ २९ ॥

१. Pā. IV-ii-83. २. Pā. IV-ii-84.

शर्करीयं शर्करिकं तथा शार्करकं क्रमात् ।
सिकताशर्कराभ्यां चेत्यणि मत्वर्थदर्शिने ॥ ३० ॥
शर्करायुक्तमध्वादौ शार्करं त्रिषु कथ्यते ।
देशे लुबिलचौ चेति चोक्तेरणमतुपोरपि ॥ ३१ ॥
शर्करा: सन्ति देशेऽस्मिन्नित्यर्थस्य विवक्षणे ।
स्युः शर्कराः शर्करिलः शार्करः शर्करावता ॥ ३२ ॥
शर्करावच्छब्देन सहेति शेषः ॥
इवार्थे शर्करादिभ्योऽण् शर्करेवेति शार्करम् ।
प्रत्ययादेः ककरस्य नास्येत्संज्ञा लशौ क्विति ॥ ३३ ॥
पुषःकिदित्युत्तरत्रैवास्य कित्त्वानुशासनात् ॥

पुषः कित् ॥ ४-४ ॥ पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ॥ ३४ ॥
औषधद्वीपविहगतीर्थरागोरगान्तरे ।
तूर्यवक्त्रेऽपि कथितं काण्डे खड्गफलेऽपि च ॥ ३५ ॥
इनिना पुष्करादिभ्यो देश इत्यत्र पुष्करी ।
स्त्रीत्वे पुष्करिणी वाप्यामृन्नेभ्यो ङीब्विधानतः ॥ ३६ ॥
पुष्करे सीदतीत्यर्थादुक्तः पुष्करसन्मुनिः ।
इञा पौष्करसादिः स्याद्बाह्वादित्वात्तदात्मजे ॥ ३७ ॥
वृद्धिः पदद्वयेऽत्रानुशतिकादिषु पाठतः ॥

कलश्च ॥ ४-५ ॥ पुष्कलस्त्रिषु पूर्णे च श्रेष्ठे च परिकीर्तितः ॥ ३८ ॥

गमेरिनिः ॥ ४-६ ॥ कालान्तरे यो गमिष्यन् स गमी परिकीर्तितः ।
समासोक्तिप्रकरणे द्वितीयायाः श्रितादिभिः ॥ ३९ ॥
गम्यादेरुपसंख्यानादुक्तो ग्रामगमी बुधैः ॥

आङि णिच्च ॥ ४-७ ॥ आयतावागमिष्यन् यः स त्वागामी निगद्यते ॥ ४० ॥

१. Pā. V-ii-104.
२. Pā. V-iii-105.
३. Pā. V-iii-107.
४. Pā. I-iii-8.
५. Pā. V-ii-135.
६. Pā. IV-i-5.
७. Pā. IV-i-96.
८. Pā. VII-iii-20.
९. Pā. II-i 26.

भुवश्च ॥ ४-८ ॥ कालान्तरे भविष्यन् यः स भावी परिकीर्तितः ॥
प्रे स्थः ॥ ४-९ ॥ प्रस्थास्यमानो यस्तत्र प्रस्थायी कथितो बुधैः ॥

परमे कित्‌ ॥ ४-१० ॥ परमेष्ठी विरिञ्चौ च पुंसि स्यात्परमेश्वरे ।
हलदन्तादितीहालुक् षत्वं स्थाथीति वार्तिकात् ॥ ४२ ॥

मन्थेः ॥ ४-११ ॥ मन्था मथनदण्डे ना वज्रे वाते बृहस्पतौ ।
स्यादात्वमत्र पथिमथ्यृभुक्षामादिति स्मृतेः ॥ ४३ ॥

ढो ढे[थोन्थ]इत्यत्र सूत्रेण ढस्य[थस्य]ढादेश[आदेश] ईरितः
भत्वे तु भस्य टेर्लोप इति टेर्लोप ऊह्यताम् ॥ ४४ ॥

ऋन्नेभ्यो ङीपि तेनात्र सुमथी सिध्यति स्त्रियाम् ॥
पतः स्थ च ॥ ४-१२ ॥ लब्धवर्णैः पुंसि पन्थाः पदव्यां परिकीर्तितः ॥ ४५ ॥

आत्वादिमथिवत्सर्वमत्र शब्दे विचिन्त्यताम् ।
पथको वुन्विधौ तत्र कुशलः पथ इत्यतः ॥ ४६ ॥

पन्थानं गच्छतीत्यर्थे पथिकः स्यात्पथः ष्कन् ।
स्त्रियां तु पथिकी षित्वात् षिद्गौरादिति ङीष्विधेः ॥

नित्यं गच्छति पन्थानं यस्तु तत्र निगद्यते ।
पन्थो ण नित्यमिति णे पान्थः पान्था स्त्रियां हि टाप् ॥

उत्तरपथेन गच्छति यो यस्तेनाहृतश्च तत्र ठञ् ।
औत्तरपथिकः स्त्री त्वौत्तरपथिकी ङीपि टिड्ढेति[१०] ॥

सूत्रं त्विहोत्तरपथेनाहृतं चेत्युदाहृतम् ।
वारिजङ्गलकान्तारस्थलशङ्कजपूर्वकात् ॥ ५० ॥

१. Pā. VI-iii-9
२. Vā. VIII-iii-97.
३. Pā. VII-i-85.
४. Pā. VII-i-87.
५. Pā. VII-i-88.
६. Pā. IV-i-5.
७. Pā. V-ii-63.
८. Pā. IV-i-41.
९. Pā. V-i-76.
१०. Pā. IV-i-15.
११. Pā. V-i-77.
१२ Vā V-i-77.

पथोऽस्मिन्नुपसंख्यानाट्ठन्गच्छत्याहृताद्वयोः[र्थयोः] ।
बुधैरूह्यस्ततो वारिपथिकाद्याः परेऽपि षट् ॥ ५१ ॥
मधुकं वा मरिचं वा[?]स्थलपूर्वादपि पथो विहिते ।
स्थूलपथ[स्थलपथिक]मिति प्रकथितमुदीरितार्थद्वये विबुधैः
चतुरर्थ्यावुञ्छणादिसूत्रपक्षादिमध्यगात् ।
पान्थायनः पथः[1]पन्थ चेति सूत्रात्फका भवेत् ॥ ५३ ॥
जाते पथः[2] पन्थ चेति सूत्रेण वुनि पन्थकः ।
ढञि पथ्यतिथी[3]त्येवं पाथेयं पथि साधुनि ॥ ५४ ॥
पथोऽनपेते पथ्यः स्याद्धर्मपथ्यर्थ[4]सूत्रतः ।
पथ्यं पथि भवेऽपि स्याद्दिगादिभ्यो[5]यदीरणात् ॥ ५५ ॥
यः शतपथमधीते वेद च षिकना भवेत्स शतपथिकः ।
षष्टिपथिकोऽपि तद्वत् स्त्री शतपथिकी च षष्टिपथिकी च ॥
ऋक्पूर[6]ब्धूरिति पथः समासान्तानुवर्णनात् ।
सर्वेष्वपि समासेषु प्रोक्ता राजपथादयः ॥ ५७ ॥
पथ्यन्तान्नञ्तत्पुरुषाद्वा समासान्तशासनात् ।
पथो[7] विभाषेति सूत्रे स्यादपन्थास्तथापथम् ॥ ५८ ॥
अपथं त्वव्ययीभावे बहुव्रीहौ स्मृतोऽपथः ।
पथं संख्याव्ययादेरित्यनेन[8] क्लीबताविधेः ॥ ५९ ॥
त्रिपथं विपथं चेत्याद्युच्यते विबुधैरिह ।
पथशब्दस्यात्र कृतसमासान्तस्य दर्शनात् ॥ ६० ॥
सुपन्था अतिपन्था इत्यत्र न क्लीबता भवेत् ।
न पूजनादिति[9] ह्यत्र समासान्तो निवारितः ॥ ६१॥

१. Pā. IV-iii-29.
२. Pā. IV-iii-29.
३. Pā. IV-iv-104.
४. Pā. IV-iv-92.
५. Pā. IV-iii-54.
६. Pā. V-iv-74
७. Pā. V-iv-72.
८. Pā. IV-i-26.
९. Pā. V-iv-69.

काभावे कापथं का पथ्यक्षयोरिति के स्मृतः।
अकारान्तः पथोऽप्यस्ति समासान्तं विनाध्वनि ॥६२॥

पुंसि तेन समासे तु पुँल्लिङ्गा विपथादयः।
पुँल्लिङ्गे कापथे काकोरीवैदर्थे च सूत्रतः ॥ ६३ ॥

परवल्लिङ्गताबाधिक्लीबत्वं हि पथादिषु।
बहुव्रीहौ न भवति विपथा नगरीति दिक् ॥ ६४ ॥

अर्तेर्भुक्षिनक् ॥४-१३॥ ऋभुक्षाः पुंसि कथितो देवराजे विचक्षणैः।
आत्वादि मथिवत्सर्वमत्रान्थादेशवर्जितम् ॥ ६५ ॥

ऋभुक्षिसाधकं सूत्रं दशपादीमते स्थितम्।
अत्र तूज्ज्वलदत्ताद्याः समासेनैनमूचिरे ॥ ६६ ॥

क्षियन्ति ऋभवो देवा अस्मिन्निति विवक्षिते।
डप्रत्यये स्वर्गवज्रवाच्यृभुक्षो भवेत्ततः ॥ ६७ ॥

मत्वर्थीयइनासिद्धेचेदृभुक्षा इति तद्वति ॥
खजेराकः ॥ ४-१४ ॥ खजाकः स्यात्पुंसि दध्नो विकारे विहगान्तरे ॥ ६८ ॥

खजाका तु स्त्रियां दर्व्यां बन्धक्यामपि कथ्यते ॥
बलाकादयश्च ॥४-१५॥ बलाका बकपङ्क्तौ च बिसकण्ठ्यां च वर्तते ॥ ६९ ॥

कामुक्यामप्यथ पुमान् बलाको बकपक्षिणि।
शलाका शल्यमदनशालिकाशल्लकीषु च ॥ ७० ॥

पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च।
व्रीह्यादित्वादिनावस्मात्पताकी वैजयन्तिके ॥ ७१ ॥

आकान्ताः केचिदन्येऽपि बलाकादिषु कीर्तिताः ॥
पिनाकादयश्च ॥४-१६॥ पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोः ॥ ७२ ॥

१. Pā. VI-iii-104.
२. Pā. VI-iii-105.
३. Pā. V-ii-116.

इनिना तु भवेदस्मात् पिनाकी चन्द्रशेखरे ।
पद्माकरे तडाको ना प्रोक्तो मध्यतृतीयकः ॥ ७३ ॥

पिण्याकः सिरहके हिङ्गौ तिलचूर्णे च कुङ्कुमे ।
पिण्याकशब्दः सिद्धोऽयं पिषेर्णत्वे युगागमे ॥ ७४ ॥

पिडागमे तु नयतेः पिन्याक इति दन्त्यवान् ।
पिनाकादावितोऽन्येऽपि ज्ञेया एवंविधा बुधैः ॥ ७५ ॥

कषिदूषिभ्यमीकन् ॥ ४-१७ ॥

कषीका पक्षिजातौ स्त्री मक्षिकायामपि स्मृता ।
दूषीका तूलिकायां स्यादपि लोचनयोर्मले ॥ ७६ ॥

ण्यन्ताद्दुषेः स्याद[दिः]....सैन्ये[?]दूषिर्दूषी तु ङीष्यतः।
उभाभ्यां खनिते [कनि तु]स्वार्थे ह्रस्वमध्यैव दूषिका ॥

ह्रस्वस्तु केऽणे इत्येवं सूत्रेणात्र विचिन्त्यताम् ॥

अनिहृषिभ्यां किञ्च ॥ ४-१८ ॥

अनीकोऽस्त्री रणे सैन्ये नीरिवन्यसोनितः[?] ॥ ७८ ॥

हृषीकमिन्द्रिये क्लीबं हृषीकेशस्तु केशवे ॥

चङ्कणेः कङ्कण च ॥ ४-१९ ॥

घण्टिकायां कङ्कणीका सैव प्रतिसरापि च ॥ ७९ ॥

शॄपॄवॄञ्जां द्वे रुक्चाभ्यासस्य ॥ ४-२० ॥

शर्शरीकस्तु हिंस्रेऽश्वे मङ्गल्याभरणेऽपि च ।
पर्परीकस्तु भक्ष्येऽग्नौ द्युमणौ च जलाशये ॥ ८० ॥

वर्वरीको वक्रकेशे तथा स्यात्केशसंचये ॥

पर्फरीकादयश्च॥४-२१॥

पर्फरीकं किसलये पालकस्तोतृमेचूषु ॥ ८१ ॥

स्फुरतेर्वा फलेः पर्वैः प्रणातेर्वा निपातनात् ।
अर्थापयामासुरार्या मन्त्रभाष्ये यथोचितम् ॥ ८२ ॥

दर्दरीकं तु वादित्रे झर्झरीकं तु विग्रहे ।
तित्तिडीका चिञ्चिकायां चञ्चरीको मधुव्रते ॥ ८३ ॥

1. Pā. VII-iv-13.

चरेर्नुं चेति हि नुमा प्राक्प्राप्तो रुगपोदितः ।
मर्मरीको हीनजने कर्करीका गलन्तिका ॥ ८४ ॥

कर्करीत्यपि तत्र स्यात्तित्तिडीत्यम्लिकार्थवत् ।
बहुलोक्तेः कादिलोपह्रस्वङीषां प्रवर्तने ॥ ८५ ॥

अनयोः शब्दयोरत्र व्युत्पत्तिरुपजायते ।
अन्ये तु कर्करीशब्दमनुवृत्त्या प्रचक्षते ॥ ८६ ॥

पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे ।
पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥ ८७ ॥

ईकारान्ताः पर्फरीकादि[रीके]ष्वन्येऽप्यूह्या विपश्चिता ॥

**ईषेः किद्ध्रस्वश्च॥४-२२॥** शलाकायामिषीकादि दीर्घोऽपि बहुलोक्तितः ॥ ८८ ॥

**ऋजेश्च ॥ ४-२३ ॥** बुधैरुपहते प्रोक्तमृजीकमभिधेयवत् ॥

**सर्तेर्नुम् च ॥ ४-२४ ॥** लालायान्तु सृणीका स्त्री पुंस्यग्नौ च समीरणे ॥८९॥

**मृडेः कीकच्कङ्कणौ ॥ ४-२५ ॥** मृडीकस्तु मृगे प्रोक्तः शिशौ तु स्यान्मृडङ्कणः ॥

**अलीकादयश्च ॥४-२६॥** अलीकमप्रिये पापे वितथेऽपि प्रकीर्तितम् ॥ ९० ॥

व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने ।
ना नागरे व्यलीकं तु पटलप्रान्त इष्यते ॥ ९१ ॥

क्लीबे पुंसि च वल्मीकं वामलूरौ चरुभिर्दि च [रुग्भिदि]।
वाहीको वाहके वृद्धौ वाहे गवि च कथ्यते ॥ ९२ ॥

इणस्सुप्रतिपूर्वात्तु सुप्रतीको गजान्तरे ।
शमीकस्त्वृषिभेदे स्यादलीकादिरितीह दिक् ॥ ९३ ॥

**कॄतॄभ्यामीषन् ॥४-२७॥** पुंसि क्लीबे च कथितः करीषः शुष्कगोमये ।
सर्वकूलाभ्रसूत्रेण स्यात्करीषं कषः खचि ॥ ९४ ॥

स्तम्भे दक्षे तरीषः स्याद्व्यवसाये तरीतरि ॥

**शॄपॄभ्यां किच्च ॥४-२८॥** शिरीषो वृक्षभेदे ना पुरीषं विशि न द्वयोः ॥ ९५ ॥

1. Pā. III-ii-42.

**अर्जेः ऋज च ॥४-२९॥** ऋजीषं पिष्टपचन उदपाने वने तथा ।
निष्पीडितरसे सोमलताशेषे च कथ्यते ॥ ९६ ॥

**अंबरीषं ॥४-३०॥** अम्बरीषं रणे राष्ट्रे क्लीबं पुंसि नृपान्तरे ।
नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ॥ ९७ ॥
आम्रातकेऽनुतापे च स्यात्खण्डपरशावपि ॥

**कृशॄपॄकटिपटिशौटिभ्य ईरन् ॥ ४-३१॥** वशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् ॥ ९८ ॥
करीरा चीरिकायां स्त्री दन्तमूले च दन्तिनाम् ।
वपुष्यस्त्री शरीरं स्यात्परे द्रव्येऽपि कथ्यते ॥ ९९ ॥
फले परीरं दर्यान्तु कटीरो जघनेऽपि च ।
पटीरश्चन्दनरसे कन्दुके [कण्टके] कार्मुके स्मरे॥ १०० ॥
शौटीरस्तु भवेद्वीरे दानशौण्डेऽप्ययं स्मृतः ।
ब्राह्मणादिष्यङि त्वस्माच्छौटीर्यं भावकर्मणोः ॥ १०१ ॥
हिण्डीरप्रमुखाश्शब्दास्सन्ति बाहुलकादिह ।
हिण्डीरोऽब्धिकफे हिण्डेर्गत्यनादरवाचिनः ॥ १०२ ॥
द्विरूपकोशसंमत्या डिण्डीरोऽप्यत्र दृश्यते ।
किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे ॥ १०३ ॥
जम्बीरः प्रस्थपुष्पाख्यस्तथा दन्तशठेऽपि च ।
तूणीरस्तु निषङ्गे स्यादूह्या एवंविधाः परे ॥ १०४ ॥

**वशेः कित् ॥ ४-३२ ॥** उशीरं वीरणतरोर्मूले स्यात्पुंनपुंसकम् ।
किसैरादिभ्यःष्ठनुक्तेरुशीरं पण्यमस्य चेत् ॥ १०५ ॥
भवेदुशीरिकः पुंसि ङीषि स्त्री स्यादुशीरिकी ।
षितः प्राग्वहतीयेषु प्रत्ययास्सप्तमी[१]स्मृताः ॥ १०६ ॥

**कशेर्मुट् च ॥ ४-३३ ॥** देशभेदे तु कश्मीरस्तस्मादणि तु शैषिके ।
काश्मीरं कुङ्कुमे प्रोक्तं टङ्कपुष्करमूलयोः ॥ १०७ ॥

१. Pâ. IV-iv-53.

कु[कृञ्] उच ॥ ४-३४ ॥ कुरीरं मैथुने क्लीबं कम्बले च निगद्यते ।
लत्वे कपिलकादित्वात्कुलीरः कर्कटे स्मृतः ॥ १०८ ॥

घसेः किच्च ॥ ४-३५ ॥ क्षीरं तु न द्वयोर्दुग्धे सलिलेऽपि प्रकीर्तितम् ।
क्षैरेयं तत्संस्कृतं यत्क्षीरे क्षीराड्ढञित्यतः ॥ १०९ ॥
अभक्षेऽपि यवाग्वादौ स्याद्भक्षा इत्यनाश्रयात् ॥

गभीरगम्भीरौ ॥४-३६॥ निम्ने गभीरगम्भीरौ स्यातामचपलेऽपि च ॥ ११० ॥
गम्भीराञ्ञ्य इति ञ्येन गाम्भीर्यं तद्भवे त्रिषु ।
ब्राह्मणादिष्यञा क्लीबमेतत्तद्भावकर्मणोः ॥ १११ ॥
ष्यञः षित्वेन ङीष्यत्र गाम्भीरी कथ्यते स्त्रियाम् ॥

विषा विहा ॥ ४-३७ ॥ विषा बुद्धौ विहा स्वर्गे भवेतामव्यये इमे ॥ ११२ ॥

पच एलिमच् ॥४-३८॥ पचेलिमो वह्निरव्योः कर्तरि प्रत्ययो ह्यसौ ॥

शीङो धुग्लग्वलञ्-वालञः ॥ ४-३९ ॥ पुंनपुंसकयोश्शीधुरर्धर्चादिः सुराभिदि ॥ ११३ ॥
गोपोष्टगिति सूत्रेण मधुपो मद्यपायिनि ।
शीलं स्वभावे सद्वृत्ते स्वार्थष्यञि तु सत्यतः ॥ ११४ ॥
ङीषि शैलीत्यपि भवेज्जलनील्यां तु शैवलः ।
प्रकोष्ठं [ ? ] शैवले क्लीबे शैवालमपि शैवले ॥ ११५ ॥
वस्य बाहुलकात्पत्वे शैपालं शैपलश्च सः ॥

मृकणिभ्यामूकोकणौ ॥ ४-४० ॥ मरूकः कोकमण्डूकमृगेष्वपि शिखावके ॥ ११६ ॥
काणूकः पुंसि काके च श्रेयस्यपि निगद्यते ॥

वलेरूकः ॥ ४-४१ ॥ भवेदुत्पलमूले च वलूको विहगेऽपि च ॥ ११७ ॥

उलूकादयश्च ॥४-४२॥ उलूकः कुरुयोधे स्यात्पेचके जम्भभेदिनि ।
वदेर्यङन्तादूकश्चेद्वावदूकः प्रवक्तरि ॥ ११८ ॥
कुर्वादित्वादपत्येऽस्माद्वावदूक्य इति स्मृतः ।
वदेरूकोऽपि तत्रत्यपाठादस्येति मन्वते ॥ ११९ ॥

१. Pā. IV-ii-20.
२. Pā. IV-iii-58.
३. Pā. III-ii-8.
४. Pā. IV-i-151.

शमेर्बुक् च ॥ ४-४३ ॥ शम्बूको गजकुम्भाण्डे[म्भान्ते] दैत्यभेदेऽपि हिंसके ।
जलशुक्तौ शु····मुक्तस्विह बाहुलकादुके ॥ १२० ॥

शम्बुको ह्रस्वमध्यः स्यादेवं जम्बूकजम्बुकौ ।
भवेतां फेरवे नीचे प्रतीचीदिक्पतावपि ॥ १२१ ॥

बन्धूको बन्धुजीवे स्यादप्यसौ पीतसारके ।
भल्लूकः स्यादच्छभल्ले ह्रस्वमध्योऽपि भल्लुकः ॥१२२॥

उलूकादिष्वमी चान्येऽप्येवमूह्या विपश्चिता ॥
शलिमण्डिभ्यामूकण् ॥ ४-४४ ॥ कन्दे सौगन्धिकादीनां शालूकमिति कथ्यते ॥१२३॥

मण्डूको बन्धभेदेऽपि दर्दुरे शोणकेऽपि च ।
मण्डूकीति तु मण्डूकपर्ण्यां मण्डूकयोषिति ॥ १२४ ॥

माण्डूकेयश्च माण्डूको माण्डूकिरिति च त्रयः ।
अपत्ये ढक्च मैण्डूकादिति वा ढगणोरिञि ॥ १२५ ॥

माण्डूकायन्यणि स्त्रीत्वे ष्फविधानेन सिद्ध्यति ।
नियो मिः ॥ ४-४५ ॥ नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम् ॥१२६॥

नक्षत्रनेमी रेवत्यां स्त्री ना विष्णौ हिमद्युतौ ।
नेमि श्यति प्रदेशोऽयमिति नेमिश उच्यते ॥ १२७ ॥

तत्संबन्धादरण्यं च नैमिशं शैषिकादणः ।
अयं बाहुलकादन्यत्रापि मिप्रत्ययो भवेत् ॥ १२८ ॥

या प्रापणे जै क्षये चेत्वाभ्यामस्मिन्प्रवर्तिते ।
उभे स्त्रियौ यामिजामी स्यातां स्वसृकुलस्त्रियोः ॥१२९॥

अर्तेरूच्च ॥ ४-४६ ॥ ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः ।
वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि ॥ १३० ॥

गतिभेदे तुरङ्गाणामपि विद्वद्भिरुच्यते ॥
भुवः किच्च ॥ ४-४७ ॥ स्थानमात्रे च विबुधैर्भूमिर्भुवि च कथ्यते ॥ १३१ ॥

भूमिजो जनकेऽङ्गारे तयोर्भौमः शिवाद्यणि ।
सीतायां भूमिजा भौमी जातिङीषि स्त्रियामुभे ॥१३२॥

कृष्णोदक्पाण्डुसंख्याया भूमेरच्प्रत्ययस्मृतेः ।
कृष्णभूम उदग्भूमः पाण्डुभूमो द्विभूमवत् ॥ १३३ ॥

यथोचितसमासार्थवर्णनेनावगम्यताम् ॥

अरे रश्च [अश्नोते रश्च] ४-४८ ॥

प्रग्रहे च मयूरे च रश्मिः पुंस्यभिधीयते ॥ १३४ ॥

दल्मिः ॥ ४-४९ ॥

वीज्याज्वरिभ्यो निः ॥ ४-५० ॥

दल्मिरिन्द्रायुधे चेन्द्रेऽप्यायुधे च निगद्यते ॥
वेणिः स्यात्कचबन्धेऽपि नदीनां मेलनेऽपि च ॥१३५॥

देवताकेऽपि णत्वं तु भवेद्बाहुलकादिह ।
त्रिवेणी त्रिवणं चेति शिवादिगणसूत्रतः ॥ १३६ ॥

त्रैवणं तदपत्ये स्यादणर्थोक्तसमासतः ।
ज्यानिः स्त्रियां वृद्धिहानिप्रभावेषु सरित्यपि ॥१३७॥

जूर्णिः स्त्रियां भवेद्रोगे सूर्येऽग्नौ च पुमानयम् ॥

सृवृषिभ्यां कित् ॥ ४-५१

सृणिः स्यादङ्कुशेऽग्नौ च सलिलेऽपि समीरणे ॥१३८॥

वृष्णिस्तु यादवे मेषे पाषण्डे चन्द्रमस्यपि ॥

अङ्गेर्नलोपश्च ॥ ४-५२ ॥

चित्रके पावके गार्हपत्यादौ चाग्निरुच्यते ॥१३९॥

स्वाहायां च स्मृताग्नायी वृषाकप्यग्निशंसनात् ।
सर्वत्राग्निकलिभ्यां ढगिति वार्तिकशासनात् ॥ १४० ॥

प्राग्दीव्यतीयेष्वर्थेषु स्यादाग्नेयं विशेष्यवत् ।
अग्नायी देवतास्येत्यप्याग्नेयं पुंवदुक्तितः ॥ १४१ ॥

वार्तिके पर्युदासार्हः स्त्रीभ्यो ढगिति ढग्यतः ।
देवताद्वन्द्वनिर्वृत्तावीदग्नेरिति शासनात् ॥ १४२ ॥

१. Pā. IV-i-112.
२. Vā. V-iv-75.
३. Pā. IV-i-37.
४. Vā. IV-i-86.
५. Pā. IV-i-120.
६. P. VI-iii-27.

अग्नीषोमाविवावग्नीवरुणाविति चोच्यते ।
ईद्वृद्धाविति चेदाग्निमारुतं चाग्निवारुणम् ॥ १४३ ॥
आग्नावैष्णवमित्यत्र नेत्वं विष्णौ निषेधतः ।
उक्तेषु देवताद्वन्द्वे चेति वृद्धिः पदद्वये ॥ १४४ ॥
आनङ् च देवताद्वन्द्वे चेत्याग्नावैष्णवस्थले ।
आग्नेन्द्रमिति नेन्द्रस्य परस्येति निषेधतः ॥ १४५ ॥
उत्तरस्मिन् पदे वृद्धेरिद्वृद्धाविति नापतेत् ।
इत्वेनालौकिके वाक्य आनङीत्वं च बाध्यते ॥१४६॥
अबाधे लौकिकेऽप्याप्त्या न सिध्येदाग्निवारुणम् ।
दीर्घाच्च वरुणस्येति परवृद्धिनिषेधतः ॥ १४७ ॥
अग्निष्टुदग्निष्टोमोऽग्नीषोमाविति च षत्वतः ।
अग्निष्टोमः क्रतौ मुख्यः तद्ग्रन्थे त्वस्य लक्षणा ॥१४८॥
वेदेत्याद्यद्द्वितीयस्मादधीत इति चेदपि ।
क्रतूक्थादीति सूत्रेण स्यादाग्निष्टोमिकष्ठकि ॥ १४९ ॥
यतः क्रतुविशेषाणां सूत्रे तत्रोपसङ्ग्रहः ।
यस्त्वग्निमिन्धे तत्राग्नीदाग्नीध्रं शरणे ततः ॥ १५० ॥
अग्नीधः शरणे रण् भत्वं चेति ह्यनुशासनम् ।
अग्नीदप्युपचारेण तत्स्थ्यादाग्नीध्र उच्यते ॥१५१॥
आग्नीध्रसाधारणादञ्याग्नीध्री स्वार्थिके स्त्रियाम् ।
अग्निमिन्धेमाग्नाष्ट्राग्न्योरिन्ध इति सूत्रतः [वार्तिकात्]
सुपि स्थ इति केऽनिष्ठः षत्वमम्बाम्बसूत्रतः ।
अग्नौ चेरिति सूत्रेण क्विपि सत्यग्निचिद्भवेत् ॥१५३॥

१. P. VI-iii-28.
२. Pā. VII-iii-21.
३. Pā. VII-iii-22.
४. Pā. VI-iii-28.
५. Pā. VII-iii-23.
६. Pā. IV-ii-63.
७. Vā. IV-iii-120.
८. Vā. VI-iii 70.
९. Pā. III-ii-4.
१०. Pā. III-ii-91.

चित्यैाग्निचित्ये चेत्यग्निचित्याग्निचयने स्मृता ॥

**वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्॥४-५१॥** नव [१]धातवः ॥

हये वृषे चित्रकेऽग्नौ वह्निर्विद्भिरुच्यते ॥ १५४ ॥

श्रेणिः पङ्क्तौ सेकपात्रे सजातौ शिल्पिसंहतौ ।

अच्याच्य[च्विच्व्य]र्थसमासेन प्राहुः श्रेणिकृतं बुधाः ॥

निःश्रेणिस्त्वधिरोहिण्यां श्रोणिः स्यात्कटिमण्डले ।

योनिर्द्वयोर्भगे स्थाने कारणाकारयोरपि ॥ १५६ ॥

द्रोणिः काष्ठाम्बुवाहिन्यां ग्लानिर्हर्षक्षये स्त्रियाम् ।

अपाये हानिराख्याता तूर्णिस्तरसि कथ्यते ॥ १५७ ॥

ह्वानिर्ग्लानिसमानार्था भवेद्धाहुलकादिह ॥

**घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥ ४-५२ ॥** अंशुज्वालातरङ्गेषु घृणिरल्पतनौ तु ना ॥ १५८ ॥

पृश्निर्वर्णे तद्युक्ते त्वेनाष [द्युते चेदेष] त्रिषु निगद्यते ।

पार्ष्णिरुन्नतनार्यो स्त्री ना त्वय गुल्फयोरधः ॥ १५९ ॥

सिध्मादिपाठतस्तद्वान् पार्ष्णीलः स्याद्द्विदीर्घकः ।

पश्चाद्भागे सैन्यपृष्ठे चूर्णिर्गद्ये प्रकीर्तिता ॥ १६० ॥

कपर्दकशते शास्त्रे भूर्णिस्तु भुवि कथ्यते ।

धारके पोषकेऽप्येष मन्त्रभाष्ये तु दृश्यते ॥ १६१ ॥

**वृदृभ्यां विन् ॥ ४-५३॥** वर्विः स्याद्धस्मरे वाच्यलिङ्गको धरणौ स्त्रियाम् ।

दर्विस्तु शकटे दारुहस्तकेऽपि प्रकीर्तिता ॥ १६२ ॥

**जॄशॄस्तॄजागृभ्यः क्विन् ॥ ॥ ४-५४ ॥** चत्वारो धातवः ॥

फल्गौ च चटके काये पर्शौ जीर्विर्निगद्यते ।

शीर्विः क्रिमौ च हिंस्रे चाध्वर्यौ स्तीर्विर्नगेऽपि च ॥

जातवेदसि भूपाले जागृविः परिकीर्तितः ॥

**दिवो द्वे दृ र्घश्चाभ्यासस्य ॥ ४-५५ ॥** वह्नौ स्वर्गे दीदिविर्ना धिषणे त्वेतदस्त्रियाम् ॥१६४॥

१. Pā. IV-1-132. २. Pā. V-11-97.

**कुविघृष्विच्छविस्थवि-किकीदिव ॥ ४-५६ ॥**

किकिदिवि इति सर्वह्रस्वो वा । पञ्च शब्दाः । षड्वा॥
कुविस्तु तन्तुवायस्य द्रव्ये कारौ च कथ्यते ।
घृष्विस्तु सूकरे पुंसि सवने च हुताशने ॥ १६५ ॥

कुचिच्छविः प्रकथिता स्त्रियां शोभारुचोरपि ।
स्थविः स्यात्तन्तुवायेऽपि पुमान्वायावजङ्गमे ॥ १६६ ॥

एकदीर्घाविमौ चाषे किकिदीविः किकीदिविः ।
विपर्यासो बाहुलकाद्विज्ञेयो ह्रस्वदीर्घयोः ॥ १६७ ॥

अन्ये किकिदिविं सर्वह्रस्वमेव बभाषिरे ।
एके तु किकिदीवी तु नामनी द्वे न्यरूपयन् ॥ १६८ ॥

किकिः पक्षिणि च प्राज्ञे दीविः श्वापदधूर्तयोः ॥

**पातेर्डतिः ॥ ४. ५७ ॥**

पतिर्धवे ना त्रिष्वीशे समासे विर्न तु स्वतः ॥ १६९ ॥

संख्यासूत्रेणानडतेर्ग्रहणं न तु साक्षतः[1] ।
प्रसारणं तत्पुरुषेष्वज[षे ष्यङ]न्तस्य भवेदिह ॥१७०॥

कारीषगन्धीपत्यादिरस्योदाहरणं मतम् ।
प्राग्दीव्यतीयार्थेषु ण्यः पत्युत्तरपदाद्यदि ॥ १७१ ॥

प्राजापत्यादयः शब्दाः स्युरपत्यादिवाचकाः ।
एष्वेवार्थेष्वाश्वपतादयः स्युरणि केचन ॥ १७२ ॥

एवं गाणपतं गाणपत्यं स्वार्थे ष्यञा स्मृतम् ।
पत्यन्तमात्रे यद्वा[यग्मा]वकर्मार्थो विहितो यतः ॥१७३

सैनापत्यादयस्तेन शब्दा विद्वज्जनैः स्मृताः ।
धवार्थाद्यज्ञसंयोगे स्त्रियां पत्नीति कथ्यते ॥ १७४ ॥

शूद्रपत्नीति शब्दस्तु सपूर्वत्वेन पाक्षिकः ।
व्यासः शूद्रस्य पत्नीति प्रयोगस्त्वौपचारिकः ॥ १७५॥

1. Pā. IV-i-85.

आचारार्थे क्विबन्तादञ्-
क्यङन्ताद्वा [न्ताच्च कर्त्रर्थे वा] भवेत् क्विपि ।
पत्नियौ पत्निय इति स्यादियङ् धातुसंज्ञया॥ १७६ ॥
उक्ताः सपत्न्यो वनिता भर्तुरैक्ये परस्परम् ।
नकारशासनान्नित्यंसैपत्न्यादिषुसूत्रतः । ॥ १७७ ॥
व्यन्सैपत्न इतीवार्थे निर्देशेनात्प्रवर्तनात् ।
अर्थे सपत्नी वेत्यस्मिन् सपत्नः कथितो रिपौ ॥१७८॥
ततः शार्ङ्गरवादित्वात्सपत्नी ङीनि कथ्यते ।
तदपत्ये तु सापत्नः शिवाद्यणि निगद्यते । ॥ १७९ ॥
ईशस्यैक्ये सपतयः सपत्न्यश्च....[स्युर]ङ्गनाः ।
नकारस्य विभाषा सपूर्वस्येत्यनुशासनात् । ॥ १८० ॥
इत्थं सपत्न्यपत्ये तु सापत्यः परिकीर्तितः ।
ण्ये दित्यदित्यादित्येति पुंवत्वे च भसंज्ञया ॥ १८१॥
ढञ्प्रत्यये पैथ्यतिथिवसतिस्वपतेरिति ।
स्वपतौ साध्विति ह्यर्थे स्वापतेयं धने स्मृतम्॥ १८२ ॥
पतिश्शीलक्षणे जार्यापत्योऽष्टगिति टग्वशात् ॥

शकेर्ऋतिन् ॥ ४. ५८ ॥ क्लीबे शकृत्पुरीषे स्याच्छसादावस्य वा शकन् ॥१८३॥
वत्से शकृत्करिः स्तम्बशकृतोरिनितीन्वशात् ॥

अमेरतिः ॥ ४. ५९ ॥ अमतिस्त्वनभिप्राये रुजायां चन्द्रकालयोः ॥ १८४ ॥

वहिवस्यर्तिभ्यः चित् ॥ ४. ६० ॥ वहतिर्वृषभे वायौ महामात्रे कुटुम्बिनि ।
वसतिस्तु निशि स्थित्यां जैनानामाश्रये गृहे ॥ १८५ ॥
ढञ्प्रत्यये पैथ्यतिथिवसतिस्वपतेरिति ।
वासतेऽयं तत्र साधौ मेद्यलिङ्गकमुच्यते ॥ १८६ ॥

१. Pā. IV-i-35.
२. Pā. IV-i-145.
३. Pā. IV-i-73.
४. P5. IV-i-112.
५. Pā. IV-i-34.
६. Pā. IV-i-85
७. Pā. IV-iv-104.
८. Pā. III ii-52.
९. Pā. III-ii-64.
१०. Pā. IV-iv-104.

अधृतौ रमणं[?] चैव क्रोधेऽप्यरतिरुच्यते ॥

अञ्चेः को वा ॥४. ६१ ॥ ब्रह्माग्नियज्ञपवनेष्वङ्कतिश्चाञ्चतिः पुमान् ॥ १८७ ॥

हन्तेरंह च ॥ ४. ६२ ॥ रथमांसार्थकालेषु दानेऽप्यंहतिरुच्यते ॥

रमेर्नित् ॥ ४. ६३ ॥ रमतिर्नायके नाके काले कामे च कथ्यते ॥ १८८ ॥

सूञः क्रिः ॥ ४. ६४ ॥ सूरिर्विदुषि सूरीति नान्तोऽप्येवं तु तद्भ्रमः ।
दशपाद्यां सुञो दीर्घश्चेत्युक्त्वा निद्विधीयते ॥ १८९ ॥
नकारो नानुबन्धोऽत्र प्रत्ययोऽन्यो ह्यनन्तरे ।
सूत्रे प्रस्तोष्यते नो चेत् लाघवात्क्रिन् भवेदिह ॥१९०॥
दशपादीवृत्तिकृतो नितमेनं यदूचिरे ।
न तद्युक्तं श्रु. [ति] ष्वन्तोदात्तस्यैवात्र दर्शनात् ॥१९१॥

अदिशदिभूशुभिभ्यः क्रिन् ॥ ४. ६५॥ चत्वारो धातवः ॥
अद्रिः शैलद्रुमार्केषु शद्रिर्वद्रेभशर्करे[?] ।
भूरिर्ना वासुदेवे च शिवे च परमेष्ठिनि ॥ १९२ ॥
सुवर्णे तु भवेत्क्लीबं प्राज्ये स्याद्वाच्यलिङ्गकम् ।
शुभ्रिर्ब्रह्मणि सूर्ये ना शोभने त्वभिधेयवत् ॥ १९३ ॥

वङ्क्रयादयश्च ॥४. ६६॥ गृहदारुणि पार्श्वास्थ्नि वाद्यभेदे च दन्तुरे ।
वङ्क्रिः स्यात्कुटिले राजन्यप्येष कथितो बुधैः ॥१९४॥
वप्रिशब्दस्तु विद्वद्भिः क्षेत्रवाची निगद्यते ।
अङ्घ्रिस्तु चरणे बुध्ने सौत्रात्तन्द्रिः प्रमीलने ॥१९५॥
पक्षे तन्द्रीत्यपि भवेत्कृदिकारादिङीष्वशात् ।
गुणे बाहुलकाद्भेरिः स्त्रियां वाद्यान्तरे स्मृता ॥ १९६ ॥
वङ्क्र्यादय इमेऽन्येऽपि ज्ञेया एवंविधा बुधैः ॥

राशदिभ्यां त्रिप् ॥ ४. ६७ ॥ रात्रिः क्षपायां स्त्री रात्रिंचररात्रिचरावुभौ ॥ १९७ ॥
रात्रेः कृतिविभाषेति मुंविकल्पेन राक्षसे ।
अहस्सर्वैकदेशेति सूत्रेणाच्प्रत्ययस्मृतेः ॥ १९८ ॥

१. Pā. VI-iii-72.　　२. Pā. V-iv-87.

अहोरात्रः सर्वरात्रः पूर्वरात्र इतीह दिक् ।
एषां पुँलिङ्गता रात्राह्नाहाः पुंसीति शासनात् ॥ १९९ ॥
एकरात्रादिरात्रान्तं संख्यापूर्वं नपुंसकम् ।
निर्वृत्तादिषु रात्र्यन्तात् द्विगोरर्थेषु ठञ्खयोः ॥ २०० ॥
द्वैरात्रिकद्विरात्रीणौ रात्र्यहःसूत्रतः स्मृतौ ।
शत्रिर्नाम्भोधरे विष्णौ कुञ्जरेऽपि प्रकीर्तितः ॥ २०१ ॥

**अदेः त्रिनिश्च ॥ ४. ६८॥** अत्री तु भक्षकेऽत्रिश्चादत्र सूत्रे त्रिपा मुनौ ।
ईतश्चानिञ इत्युक्तेरात्रेयोऽपत्यढग्वशात् ॥ २०२ ॥
अत्रिर्भृग्वादिसूत्रेण बहुत्वे गोत्रलुग्विधेः ।
अत्रयोऽत्री न त्रिभिरित्यादीन्यूह्यानि पण्डितैः ॥ २०३ ॥
लज्यस्वलायामात्रे [आत्रेय्यस्तु स्त्रियामत्र]
टिड्ढाणञिति ङीब्वशात् ।
अदेस्त्रिन्नित्यदेस्त्रिन्त्रिचेति पाठौ त्वनाकरौ ॥ २०४ ॥

**पतः त्रिन् ॥ ४. ६९ ॥** पतत्रिर्विहगे पुंसि विबुधैः परिकीर्तितः ।
इनौ पतत्रो[त्रात्] नान्तोऽपि पतत्री पक्षिवाचिनः ॥२०५

**मृकणिभ्यामीचिः ॥ ४. ७० ॥** मरीचिः कृपणे दीप्तावृषिभेदे च दृश्यते ।
तदपत्ये तु मारीचिर्बाह्वादित्वादिञा भवेत् ॥ २०६ ॥
कणीचिः पुष्पितलताकुञ्जयोः शकटे स्त्रियाम् ।
पल्लवे पुष्पसङ्घाते निनादेऽश्वेऽपि चक्षुषि ॥ २०७ ॥

**श्वयतेश्चित् ॥ ४. ७१ ॥** श्वयीचिस्तु पुमानिन्द्रे श्वयथावपि कथ्यते ॥

**वेञो डिच्च ॥ ४. ७२ ॥** वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः ॥ २०८ ॥
नञ्समासे त्ववं वीचिरहिते नरकान्तरे ॥

**ऋहनिभ्यामूषन् ॥ ४. ७३ ॥** अरूषस्तु भवेद्भानौ हनूषो राक्षसे स्मृतः ॥ २०९ ॥

**पुरः कुषन् ॥ ४. ७४ ॥** पुरुषः पुरुषे सांख्यज्ञे च पुन्नागपादपे ।

१. Pā.II iv-29.
२. Pā. V-i-87.
३. Pā. IV-i-122
४. Pā. II-iv-65.
५. Pā.IV-i-15.

दीर्घो यदि स्यादन्येषामपि दृश्यत इत्यतः ॥ २१० ॥
पूरुषेऽपि प्रयुज्येते मानभेदेऽप्ययम् बुधैः ।
पुरुसंज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरः ॥ २११ ॥
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ।
इत्यारभ्य पुराणोक्तिर्वासुदेवेऽप्ययं स्मृतः ॥ २१२ ॥
अण्यस्मात्पौरुषं तस्य भावे कर्मणि तेजसि ।
ऊर्ध्वविस्तृतदोःपाणि नृमानेऽपि च कथ्यते ॥ २१३ ॥
प्रमाणं सोऽस्य पुरुषद्वयसं पौरुषं च तत् ।
पुरुषस्य वधे तस्य विकारे तस्य संहतौ ॥ २१४ ॥
पुरुषेण कृते पौरुषेयं ढञि निगद्यते ।
प्रमाणपुरुषान्ताद् ङीब्वा तद्धितलुकि द्विगोः ॥२१५॥
नेन द्विपुरुषी ङीपि टापि द्विपुरुषा स्मृता ।

पृनहिकलिभ्य उषन् ॥ ४. ७५ ॥

परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत् ॥ २१६ ॥
नहुषो राजभेदेऽपि छागभेदे भुजङ्गमे ।
कलुषं पातके क्लीबमाविले त्वभिधेयवत् ॥ २१७ ॥

पीयेरूषन् ॥ ४. ७६ ॥

पीयुधातुर्भक्षणार्थः सौत्र ऊषन्यतः कृति[कृते] ।
पीयूषं सप्तदिवसावधि क्षीरे तथामृते ॥ २१८ ॥
गुणे बाहुलकादस्य पेयूषोऽभिनवं पयः ॥

मस्जेर्नुं च ॥ ४. ७७ ॥

मञ्जूषा पेटके स्त्री स्याद्वीणाच्छादनके तुरी ॥२१९॥

गडेश्च ॥ ४. ७८ ॥

गण्डूषो मुखपूर्तिप्रपुष्करप्रसृतोऽप्यते ।
चमूषो धान्यलेखे स्यात् चमेर्बाहुलकादिह ॥ २२० ॥

अर्तेररुः ॥ ४. ७९ ॥

अररुस्त्वायुधे चैव शत्रौ च परिकीर्तितः ॥

कुटः किच्च ॥ ४. ८० ॥

कुटरुर्वर्धका वस्त्रगेहेऽपि परिकीर्तितः ॥ २२१ ॥
कुटादिपरतालब्धङित्वेनैवात्र न क्रमे[?] ।
सिद्धे कित्वं....कद्रु........वाचकम् ॥ २२२ ॥

